* ओ३म् *

श्रीकांगड़ीगुरुकुलविश्वविद्यालयगीर्वाणवाणीग्रंथावल्याम्—

# साहित्य सुधासंग्रहः

## प्रथम बिन्दुः

गुरुकुलाऽऽचार्यमहोदयस्याऽऽदेशात्

बिजनौरमंडलान्तर्गत हल्दौरग्रामवास्तव्येन

**श्रीभवानीप्रसादेन**

गुरुकुलसाहित्याध्यापकेन

**श्रीवागीश्वर विद्यालङ्कारेण च**

संगृहीतः

१९८३ श्रीवैक्रमाब्दे<br>१०२ श्रीमद्दयानन्दाब्दे

मूल्यम्<br>१।) रु० मात्रम्

# पूर्वाभाषणम्



मानुषवाङ्मयमात्रे रसात्मिका हि वाणी मानवानां मनांसि बलाद्वशीकरोत्येव, परं सुरवाणीसाहित्यस्य सुमनांसि केनाप्यपूर्वेण सौरभेण सहृदयानां हृदयानि यथाह्लादयन्ति मदयन्ति च, न तथेत-रासां भाषाणां कविताकलापः । गीर्वाणवाणीसाहित्यसुधामास्वाद-मास्वादं यमानन्दं चेतोऽनुविन्दते, तस्य शतांशमपि नोपलभ्यतेऽन्यत्रे-त्यत्र देववाणी विशारदा एव प्रमाणम् । संस्कृतवाण्यां विविधभाव-प्रादुर्भावसमर्थानां शब्दानां कोशस्य विशालताऽत्र प्रथमो हेतुः। यथा नानार्थव्यञ्जकैरनन्तशब्दैः विविधाः परः संख्याः श्लेषादयोऽलंकाराः संस्कृतसाहित्ये निर्मीयन्ते, विविधरसानां परिपाकश्च जायते, तथा मितार्थशब्दकृच्छ्रताक्षीणकलेवरासु परवाक्षु भवितुं नार्हति । संस्कृत-साहित्ये हि शब्दालङ्काराणामर्थालङ्काराणाञ्च या संख्या दरीदृश्यते, तेषामवान्तरभेदानाञ्च यो विस्तरो वरीवर्ति, नवानां दशानां वा रसानां यथाविध परिपोषश्च जायते, तदितरभाषाकवितायां लेशतो ऽपि न कुत्रापि प्राप्यते । इतरभाषासु वृत्तमयमेव वाङ्मयं कविता-पदभाग् भवति, तत्रैव चमत्कृतेरुपलम्भात्, परं संस्कृतसाहित्ये गद्ये पद्ये च द्वयोः समाना कविताश्रीर्विराजते, उभयत्र रमणीयार्थ-प्रतिपादकशब्दानां विलासात् ।

संस्कृतसाहित्यस्य सर्वश्रेष्ठविशिष्टशोभाधायकत्वे वैदिकार्याणां परिस्थितिविशेषः आर्यभूमौ भारतवर्षे च तेषामादिमो निवासोऽपरं कारणम्। भारतीयार्य्याणामाद्यपूर्वपुरुषाणामेव विमलमानसमुकुरेषु पुराणपुरुषस्यानादिकवेस्तत्काव्यस्य ज्योतिरुदियाय यस्य विषये "पश्य देवस्य काव्यं न ममार न जीर्यतीति" श्रुतिर्जागर्तितराम्। अनादिकवयितुस्तत् पुराणं काव्यमेव सततमधीयाना आर्यपुरुषोत्तमाः निसर्गत एव कविताप्रणयिनः काव्यरसिकाश्च संबभूवुः। तेषां नित्यं व्यवहार्य्याणि वाक्यान्यपि कवितामयान्येव जातानि। तेनैव हेतुना संस्कृतस्यापभ्रंशभूताया हिन्दीभाषाया व्रजभाषाया वापि माधुर्ये कापि भाषा जगतीतले तुलां नाधिरोहति। एतमेव विषयमधिकृत्य वृन्तकथा प्रचलिता–यदेकः पारसीकः कविर्व्रजभाषाकवितां संग्रहीतुं व्रजमण्डलमाययौ। मध्येमार्गं कस्याश्चिद्ग्रामटिकाया रथ्यामटन् कस्याश्चिज्जलघटवाहिकायाः कुमार्याः "सांकरी गली मैं माय कांकरी गड़तु है" (मातः संकीर्णपद्धत्यां शर्कराः पादौ पीडयन्ति) इति मधुरालापमश्रौषीत्। स "साँकरी काँकरी" इत्यनुप्रासपुष्टया भणित्या विस्मितोऽवोचत्–अहो! यस्य देशस्य जलवाहिका ग्रामीणाः कुमार्योऽपि साधारणालापेऽनुप्रासं प्रयुञ्जते तस्य कवीनां वाचः कैरपूर्वैर्मनोहरैरलङ्कारैर्भूषिताः स्युः।

कस्यचिद्देशस्य प्राकृतिकशोभापि कवीनां प्रतिभाया विकासने प्रबला प्रेरिका भवति, पुण्यभारतभूमेर्मनोहरविशालगिरिकाननानि, निर्मलसलिलप्रवाहाः सरितः, प्रशस्यशस्यक्षेत्राणि, शाश्वतहरिच्छाद्वलान्यपि भारतकवीनां वाचः प्रसभं सततं मुखरयन्ति स्म। संसारसारभूतस्य भूमण्डलललामस्य प्रकृतिदेव्याः लीलानिकेतस्य भारतवर्षस्य वसन्तवर्षाशरद्धेमन्तादयः षडृतवोऽपि भारतीयकवीनां प्रतिभामनिशमुद्बोधयामासुः। वनवासविलाससुभगस्य प्रकृतिशोभानिरीक्षण-

निरतस्यैव पुण्यसलिलां वितमसां तमसामवगाहमानस्याऽऽदि-कवेर्महर्षेर्वाल्मीकेर्व्याधबाणविद्धक्रौञ्चदर्शनेनोत्थितः शोकः श्लोकत्व-मापद्यत । तमेव श्लोकमादाय स मुनिसत्तमः सूर्यवंशावतंसस्य मर्यादापुरुषोत्तमस्य श्रीरामस्य सच्चरितवर्णनपरं रामायणरूपं तद-मरममूल्यग्रन्थरत्नमग्रथ्नाद्यदपरेषां कविकुलगुरुश्रीकालिदासादीनां सकलरामयशोविस्तारककवीनामुपजीव्यम्, निबिडान्धकाराच्छन्नेति-वृत्ते ऽज्ञानमये चास्मिन्समये परपददलितेभ्यो भारतीयेभ्यः कञ्चिदि-तिहासप्रकाशमर्पयति, यस्मादेव विरलश्रुतिप्रचारेऽपि कलिकाले-ऽधुना धर्मभीरवो भारताभिजनाः सदाचारसरणिं शिक्षन्ते, येनैवै-तद्देशीया दास्यदीना अपि जनाः समुन्नतानामपरेषां राष्ट्राणामग्रे स्व-मस्तकानि समुन्नमयन्ति ।

ततो द्वापरे कालिन्दीकूलकमनीयकानने ऽतिवाहितकालः कृष्ण-द्वैपायनर्षिप्रवरः पाण्डवानां जयज्ञापकं जयाभिधानं महाकाव्यं प्रणिनाय, यत्परस्ताज्जैमिनिसौतिप्रभृतिमुनिसत्तमैः प्रवर्धितो भार-ताख्यां लेभे, आर्याणाञ्च धर्मस्य, दर्शनस्य च समासेन सर्वविज्ञानानां विश्वकोशस्य पदवीं प्रापत्, यदधिकृत्य "न तदस्ति हि लोकेऽस्मि-न्भारते यन्न दृश्यते" इति लोकोक्तिश्च भारतीयेषु प्रचरति, प्रशंसा-वादेन च यत्पञ्चमो वेदो जनैरुच्यते, महत्वाच्च महाभारतमभिधीयते। कालक्रमेण कथ्याभाषारूपेण विरतदेववाणीप्रचारे विवृद्धविषयाभि-लाषे कलियुगेऽपि शरीरसुखमेव संसारसारं मन्यमानानां मानवेन्द्राणां परिषदामलङ्कारभूता भासकालिदासभारविभवभूतिभट्टबाणमाघश्री-हर्षादयः सिद्धसारस्वताः समये समये सुरवाणीकवितामातुः सेवापरा आसन् । तेषां मनोरमाणि काव्यानि संप्रत्यपि भारतगौर-ववर्धनानि । परमाश्रयदातॄणां विषयैषिणां विलासासक्तचेतसां धराधीशानां संगदोषाद्विलासवर्णनवचनीयता तेषां कमनीय-

कवितामपि संक्रान्तवती, येनान्यान् रसान् विहाय शृंगार एव प्रायशस्तेषां काव्यानां वर्णनीयविषयो बभूव। "व्यवहारविदे शिवेतर क्षतये सदुपदेशयुजे" चोद्दिष्टा कविता "ध्यायतो विषयान् पुंसः संगस्तेषूपजायते संगात्संजायते कामः" इति भगवद्भणितिनिर्दिष्टानिवार्यनियमाद्विषयप्राबल्याय कामोद्दीपनाय च प्रबभूव। उक्तञ्च प्रबोधचन्द्रोदये।

"सन्तु–विलोकन–भाषण विलास–परिहास–केलिपरिरम्भाः।
स्मरणमपि–कामिनीनामलमिह–मनसो–विकाराय" ॥

प्रणेतृभिराद्याश्रमसेविभ्यः स्वप्नेऽपि नोपकल्पितानि काव्यान्येतानि सुशब्दप्रयोगपाटवोपदेशाय मनोहरवाक्यविन्यासशिक्षणाय च परमोपयोगितया वर्णिनां पाठ्यपुस्तकरूपेण पाठशालास्वपि प्रसरं प्रापुः, येनापरिपक्वमतयोऽपि बालाः स्वामूल्यं समयं सर्वङ्कषकामकथास्वतिवाहयामासुः। बाल्य एव शृङ्गारस्य शृंगेण मर्माहतानि मन्मथेनोन्मथ्यमानानि तेषां कोमलमनांसि विद्याविनयवर्धक ब्रह्मचर्यव्रतपालन पराङ्मुखाण्यभूवन्। संलग्नसंस्काराणि नवभाजनानीव तेषां बालबुद्धयो बाल्यादेव कामकुसंस्कारोपहता विषयसेवां स्वीकृत्येन्द्रियग्राममुच्छृङ्खलयामासुः, यौवनोन्मेषकमनीयान्यपि तेषां शरीराणीन्द्रियाणामनिग्रहादसंयमनाद्वा निस्तेजस्कानि हतश्रीकानि च समपद्यन्त। परिणामतः पाठप्रणाल्याऽनयाऽद्यापि काव्यपरिशीलनपरा नाना जघन्यरोगाक्रान्ता, विहतबुद्धयो, मंदमतयो, यौवने एव जराजीर्णा, अपरजीवनं दुःखेन यापयन्तः, किमपि पराक्रमसाध्यं कार्यं नाचरन्तः, स्वल्पायुष्येव संसारादस्मात् प्रतिष्ठन्ते। किन्तु कष्टमतःपरं यद्भारतीयाः सभ्यताशिखरारूढेभ्यः सर्वापरदेशीयेभ्यः स्वल्पिष्ठमायुर्मानं दधते। सर्वविनाशकं काव्याध्ययनविधिमिमं विगर्हमाणाः केचित् प्राक्तना विपश्चितः 'काव्यालापांश्च वर्जयेदि'त्यवादिषुः।

भारतस्य पतितावस्थयानया विदीर्णहृदयो दयार्द्रचित्तो-विषयवासनाप्रवणेऽप्यस्मिन् कलिकाले विलुप्तप्रायब्रह्मचर्यप्रथापुनरुद्धारक आर्यसमाजसंस्थापक ऋषिप्रवरः श्रीदयानन्दोऽपि गुरुकुलानां पुनःस्थापनमुपदिशंस्तेषां पाठ्यक्रमञ्च निर्दिशन् शृंगाररसप्रधानानि काव्यानि वर्जयामास, श्रीवाल्मीकिरामायणमहाभारतयोश्चोपादेयांशान् काव्यत्वेन पाठ्यपुस्तकेषु निर्धारयामास।

तत्स्वर्गारोहणानन्तरमार्य्यसमाजेन स्थापितेषु गुरुकुलेषु तेषामन्तेवासिनः सुकविप्रयुक्तपदालित्येन वरेण्यवचोविन्यासेन च वञ्चिता मा भवेयुरिति मनसि निधाय गुरुकुलपाठ्यप्रणाली प्रणेतारः केषां काव्यानां के केंऽशाः पाठ्यन्तामस्माभिरिति वितर्कयामासुः। यतःसुललितभाषाप्रयोगः सुकविप्रयुक्त शब्दैरेव शिक्ष्यते, सुकविप्रयुक्तशब्दानां पठनमनिवार्यमेवेति कृत्वा मुख्ये हरिद्वारसमीपस्थ कांगड़ी-गुरुकुलविश्वविद्यालये समये समये भिन्नाः भिन्नाः काव्यांशा अन्वशील्यन्त। प्रायः प्रतिवर्षं पाठ्यपुस्तकपरिवर्तनेन समुद्वेजितास्तस्याधिकारिणः पुरुषाः सर्वेषां मुख्यकाव्यानां वर्णिनामुपयोगिनोऽशांनेकत्र संग्राहयितुं संकल्पयामासुः। कठिनकार्यमेतत्सकल संस्कृतसाहित्यपारावारीणेन केनापि परमविदुषैव सुसाध्यमासीत्, परं कांगड़ीगुरुकुलविश्वविद्यालयस्य कृतविद्यानां महोपाध्यायानामध्यापनकार्यानवकाशवशादन्यस्माद्वा कारणान्तरात्संग्रहकार्यमिदं संपादयितुमयोग्योऽप्यहं मत्परमानुग्राहकेणोपाचार्येण श्रीरामदेव महोदयेनाज्ञप्तः। संग्रहसाधने सर्वथात्मन्यविश्वस्तोऽप्ययं जन "आज्ञा प्रभूणां ह्यविलंघनीयेत्यनुसृत्य विद्वद्वर्य्य विद्यावाचस्पतिवेदान्तसांख्यतीर्थोपाधिकव्याकरणमहोपाध्याय श्री पंडितकन्हैयालालशास्त्रिभिर्दत्तावलंबो, मित्रवर्यैः साहित्यमहोपाध्याय श्री पंडित वागीश्वर विद्यालंकारैश्च प्रतिश्रुतसाहाय्यो दुस्तरेऽपि कार्येऽस्मिन् प्रावर्त्तत।

प्रशंसितानां महानुभावनां साहाय्येनानुमत्या च स्वस्वल्पसामर्थ्या-नुसारेणैवैतत्साहित्य संग्रहं कृतवानस्मि। तदिदं सम्प्रति प्रथमम् पाण्डु-लिपिरूपेण विदुषामग्रे समुपाह्रियते, द्वितीयमुद्रणावसरे च तेषां परामर्शा नादाय समुचितं संस्करणमेष्यति। विषयविषमपवाह्य वर्णिभ्यः संजीवनप्रापणप्रेप्सया संग्रहेऽस्मिन् सुधात्वारोपादस्य नाम साहित्य सुधासंग्रहः कृतः। स च काँगड़ीगुरुकुलविश्वविद्यालये महाविद्यालयविभागस्य चतुर्वर्षव्यापिश्रेणिचतुष्टयात्मकत्वात् प्रत्येकं श्रेणिनिमित्तं चतुर्षु बिन्दुषु विभज्यते। मंगलाचरणार्थं प्रत्येकं बिन्दुराऽऽदिकाव्येन वेदेन प्रारभ्यते। प्रथमो बिन्दुः प्रथमश्रेण्यै उद्दिष्टः सुगमतरैरथर्वसूक्तैरुद्घाट्यते, ततस्तस्मिन् कालानुक्रमेण धरामिमामलंकृतवताम् प्रातः स्मरणीयानां कविकुलगौरवाणां वाल्मीकिव्यासपतञ्जलिप्रभृतीनां वाग्विलासाः संगृहीताः। प्रत्येकंबिन्दोरन्तिमे भागे सभाचातुर्योपयोगीनि मनोरंजकानि कतिचित् पद्यानि प्रदत्तानि।

अवसाने चेदं पुनरुक्तवद्देवयत्स्वक्षुद्रमत्यनुरूपं कृतोऽप्ययं संग्रहः परमकृपालूनां प्राक् प्रशंसितानां महाशयानामेव साहाय्येन प्रस्तुतं रूपं प्राप। माननीयमित्रमुपाचार्यो विद्वद्वरेण्यः श्रीरामदेवमहोदयोऽप्यस्य क्रमविधौ प्रचुरं साहाय्यं दत्तवानिति तस्यापि बहु कृतज्ञोऽस्मि। अस्य संग्रहस्य मुद्रणे ये दृष्ट्यादिदोषा दृश्येरंस्ते दयादाक्षिण्याद्युदारगुणैः सुधीभिः समाधेयाः।

विदुषां वशंवदो
भवानीप्रसादः

सं० १९८३ वैक्रमाब्दे
काँगड़ी गुरुकुल विश्वविद्यालय
पर्णकुटीरे

# अनुक्रमणिका.

ॐ

# साहित्य-सुधा-संग्रहः

## प्रथमो बिन्दुः

आ ब्रह्मन्! ब्राह्मणो ब्रह्मवर्चसी
जायताम्। आ राष्ट्रे राजन्यः शूर इष-
व्योऽतिव्याधी महारथो जायताम्।
दोग्ध्री धेनु र्वोढानड्वानाशुः सप्तिः
पुरन्धिर्योषा जिष्णू रथेष्ठाः
सभेयो युवास्य यजमानस्य वीरो
जायताम्। निकामे निकामे नः प-
र्जन्यो वर्षतु। फलवत्यो न ओषधयः
पच्यन्ताम्। योगक्षेमो नः कल्पताम्॥

(यजुर्वेदात् २२-२२)

## * सौमनस्यसूक्तम् *

सहृदयं सांमनस्य मविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाऽघ्न्या ॥ १ ॥
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ॥ २ ॥
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ३ ॥
येन देवा न वियन्ति नो च विद्विषते मिथः ।
तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥ ४ ॥

ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट
संराधयन्तः सधुराश्चरन्तः ।
अन्योऽन्यस्मै वल्गु वदन्त एत,
सध्रीचीनान् वः संमनसस्कृणोमि ॥ ५ ॥
समानि प्रपा सह वोऽन्नभागः,
समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यता-
ऽऽरा नाभि मिवाऽभितः ॥ ६ ॥
सध्रीचीनान् वः संमनसस्कृणो-
म्येकश्नुष्टीन्त्संवननेन सर्वान् ।
देवा इवाऽमृतं रक्षमाणाः
सायंप्रातः सौमनसो वो अस्तु ॥ ७ ॥

( अथर्ववेदात् ३-३० )

## * ब्रह्मचर्य सूक्तम् *

ब्रह्मचारीष्णंश्चरति रोदसी उभे,
तस्मिन् देवाः संमनसो भवन्ति ।
स दाधार पृथिवीं दिवं च,
स आचार्यं तपसा पिपर्ति ॥ १ ॥

आचार्य उपनयमानो
ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्ति
तं जातं द्रष्टुमभिसंयन्ति देवाः ॥ ३ ॥

इयं समित् पृथिवी द्यौर्द्वितीयो-
ताऽन्तरिक्षं समिधा पृणाति।
ब्रह्मचारी समिधा मेखलया
श्रमेण लोकाँस्तपसा पिपर्ति ॥ ४ ॥

पूर्वो जातो ब्रह्मणो ब्रह्मचारी
घर्मं वसान स्तपसोदतिष्ठत्।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं
देवाश्च सर्वे अमृतेन साकम् ॥ ५ ॥

इमां भूमिं पृथिवीं ब्रह्मचारी
भिक्षामा जभार प्रथमो दिवं च।
ते कृत्वा समिधावुपास्ते
तयोरार्पिता भुवनानि विश्वा ॥ ६ ॥

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ ७ ॥
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।
अनड्वान् ब्रह्मचर्येणाऽश्वो घासं जिगीर्षती ॥ ८ ॥
ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥ ९ ॥
ओषधयो भूतभव्यमहोरात्रे वनस्पतिः।
संवत्सरः सहर्तुभिस्ते जाता ब्रह्मचारिणः ॥ १० ॥

ब्रह्मचारी ब्रह्म भ्राजद् बिभर्ति
तस्मिन् देवा अधि विश्वे समोताः ।
प्राणापानौ जनयन्नाद् व्यानं
वाचं मनो हृदयं ब्रह्म मेधाम् ॥ ११ ॥

( अथर्ववेदात् ११-५ )

## * पृथिवीसूक्तम् *

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥ १ ॥
असंबाधं मध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥ २ ॥
यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः ।
यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमिः पूर्वपेये दधातु ॥ ३ ॥
यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः ।
या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वप्यन्ने दधातु ॥ ४ ॥
यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् ।
गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु ॥ ५ ॥
विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ॥ ६ ॥

यार्णवेऽधि सलिलमग्र आसीद्
यां मायाभिरन्वचरन् मनीषिणः ।
यस्या हृदयं परमे व्योमन्
सत्येनाऽऽवृतममृतं पृथिव्याः ।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥ ७ ॥

गिरय स्ते पर्वता हिमवन्तो-
ऽरण्यं ते पृथिवि ! स्योनमस्तु।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां
ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् ।
अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम् ॥ ८ ॥

यो नो द्वेषत् पृथिवि ! यः पृतन्याद्
योऽभिदासान्मनसा यो वधेन ।
तं नो भूमे ! रन्धय पूर्वकृत्वरि ! ॥ ९ ॥

त्वज्जातास्त्वयि चरन्ति मर्त्या-
स्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः ।
तवेमे पृथिवि ! पञ्च मानवा-
येभ्यो ज्योतिरमृतं मर्त्येभ्य-
उद्यन्त्सूर्यो रश्मिभिरातनोति ॥ १० ॥

विश्वस्वं, मातरमोषधीनां,
ध्रुवां, भूमिं पृथिवीं धर्मणा धृताम् ।
शिवां स्योनामनु चरेम विश्वहा ॥ ११ ॥

महत् सधस्थं महती बभूविथ
महान् वेग एजथु र्वेपथुष्टे ।
महांस्त्वेन्द्रो रक्षत्यप्रमादम्
सा नो भूमे प्र रोचय, हिरण्यस्येव
संदृशि, मा नो द्विक्षत कश्चन ॥ १२ ॥

यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।
पृथिवीं विश्वधायसं धृतामच्छावदामसि ॥ १३ ॥

यावत् तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥ १४ ॥

सा नो भूमि र्विशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥ १५ ॥

यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ॥ १६ ॥
निधिं बिभ्रती बहुधा गुहा
वसु मणिं हिरण्यं पृथिवी ददातु मे।
वसूनि नो वसुदा रासमाना
देवी दधातु सुमनस्यमाना ॥ १७ ॥
ये ग्रामा यदरण्यं याः सभा अधि भूम्याम्।
ये संग्रामाः समितयस्तेषु चारु वदेम ते ॥ १८ ॥
त्वमस्याऽऽवपनी जनाना-
मदितिः कामदुघा पप्रथाना।
यत् त ऊनं तत् त आ पूरयाति
प्रजापतिः प्रथमजा ऋतस्य ॥ १९ ॥
उपस्था स्ते अनमीवा अयक्ष्मा
अस्मभ्यं सन्तु पृथिवी ! प्रसूताः।
दीर्घं न आयुः प्रतिबुध्यमाना
वयं तुभ्यं बलिहृतः स्याम ॥ २० ॥
भूमे ! मातर्निधेहि मा भद्रया सुप्रतिष्ठितम्।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥ २१ ॥

( अथर्ववेदात् १२-१)

## * दकार-त्रयोपदेशः *

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्य्यमूषुर्देवा मनुष्या असुराः। उषित्वा ब्रह्मचर्यं देवा ऊचुः "ब्रवीतु नो भवानिति" तेभ्यो हैतदक्षरमुवाच "द" इति। "व्यज्ञासिष्टा ३ इति" "व्यज्ञा-

सिष्मेति" ह ऊचुः, "दाम्यतेति—न आत्थ इति"। "ओमिति" ह उवाच, "व्यज्ञासिष्टेति" ॥ १ ॥

अथ ह एनं मनुष्या ऊचुः "ब्रवीतु नो भवानिति"। तेभ्यो ह एतदेवाक्षरमुवाच "द" इति । "व्यज्ञासिष्टा ३" इति । "व्यज्ञासिष्मेति" ह ऊचुः। "दत्त" इति न आत्थ इति"। "ओमिति" ह उवाच, "व्यज्ञासिष्टेति" ॥ २ ॥

अथ ह एनमसुरा ऊचुः"ब्रवीतु नो भवानिति"। तेभ्यो ह एतदेवाक्षर मुवाच "द" इति । व्यज्ञासिष्टा ३ इति"। "व्यज्ञासिष्म इति" ह ऊचुः । "दयध्व मिति न आत्थ"। "ओम् इति" ह उवाच, "व्यज्ञासिष्टेति"। तदेतदेवैषा दैवीवागनु वदति स्तनयित्नु "ददद इति ।" दाम्यत दत्त दयध्वमिति । तदेतत्त्रय ꣳ शिक्षेद्दमन्दानं दयामिति । ३ ॥

( शतपथ ब्राह्मणात् )

## ※ सत्यमहिमा ※

नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्। सोऽब्रवीदेत्य किं मह्यमभाक्तेति । एतमेव निष्ठावमववदितारमित्यब्रुवन् । तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाचक्षते । स पितरमेत्याब्रवीत् त्वां ह वाव मह्यं तताभाक्षुरिति । तं पिताऽब्रवीत् । मा पुत्रक तदादृथाः। अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते। ते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति। तानेते सूक्ते षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति। तथेति तानुपैत्प्रतिगृभ्णीत मानवं सुमेधस इति । तमब्रुवन् किंकामो वदसीति ।इदमेव वः षष्ठमह प्रज्ञापयानीत्यब्रवीदथ यद्व एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तोऽदत्तेति ।तथेति । तानेते सूक्ते षष्ठेऽहन्यशंसयत् ।ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम् ।तद्यदेते सूक्ते षष्ठेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै । तं स्वर्यन्तो

ऽब्रुवन् । एतत्ते ब्राह्मण सहस्रमिति । तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तु हमिति । सोऽब्रवीन्मह्यं वा इदमदुरिति । तमब्रवीत्तद्वै नौ तवैव पितरि प्रश्न इति । स पितरमैत् । तं पिताब्रवीत् । ननु ते पुत्रकादुरिति अदुरेव म इत्यब्रवीत्तत्तु मे पुरुषः कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति । तं पिताब्रवीत् । तस्यैव पुत्रक तत्तत्तुभ्यं दास्यतीति । स पुनरेत्याब्रवीत्तव ह वाव किल भगव इदमिति मे पिताहेति । सो ऽब्रवीत् । तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति । तस्मादेवं विदुषा सत्यमेव वदितव्यम् ॥

( ऐतरेय ब्राह्मणात् ५-२-१४ )

## * सप्तविकार-विजय-विधानं *

जायमानो ह वै ब्राह्मणः सप्तेन्द्रियाण्यभिजायन्ते, ब्रह्मवर्चसञ्च यशश्च स्वप्नञ्च क्रोधञ्च श्लाघाञ्च रूपञ्च पुण्यमेव गन्धं सप्तमम् । तानि ह वा अस्यैतानि ब्रह्मचर्य्यमुपेतोपक्रामन्ति, मृगानस्य ब्रह्मवर्चसं गच्छत्याचार्य्यं यशोऽजगरं स्वप्नो, वराहं क्रोधोऽपश्लाघं कुमारीं रूप, मोषधिवधस्पतीन् पुण्यो गन्धः । स यन्मृगाजिनानि वस्ते, तेन तद् ब्रह्मवर्चसमवरुन्धे, यदस्य मृगेषु भवति स ह स्नातो ब्रह्मवर्चसी भवति, स यदहरहराचार्य्याय कर्मकरोति तेन तद्यशोऽवरुन्धे यदस्याचार्य्ये भवति, स ह स्नातो यशस्वी भवति, स यत्सुषुप्सुर्निद्रान्निनयति तेन तं स्वप्नमवरुन्धे, योऽस्याजगरे भवति । तं ह स्नातं स्वपन्तमाहुः स्वपितु मैनं बोबुधथेति, स क्रुद्धो वाचा न कञ्चन हिनस्ति । पुरुषात् पुरुषात् पापीयानिव मन्यमानस्तेन तं क्रोधमवरुन्धे, योऽस्य वराहे भवति तस्य ह स्नातस्य क्रोधा श्लाघीयसं विशन्तेऽर्थान्द्रिः श्लाघ्यमानो न स्नायात्तेन तं श्लाघामवरुन्धे, योऽस्याप्सु भवति स ह स्नातः

श्लाघीयोऽन्नेभ्यः श्लाघ्यतेऽथैतद्ब्रह्मचारिणो रूपं यत्कुमार्य्यास्तामग्ना-।ग्नोदीग्नेदेतिवेति मुखं विपरिधापयेत्तेन तद्रूपमवरुन्धे, यदस्य कुमार्य्यां भवति तं ह स्नातं कुमारीमिव निरीक्षन्तेऽथैतद्ब्रह्मचारिणः पुण्यो गन्धो य ओषधिवनस्पतीनां तासां पुण्यं गन्धं प्रच्छिद्य नोपजिघ्रेत्तेन तं पुण्यं गन्धमवरुन्धे, योऽस्यौषधिवनस्पतीषु भवति स ह स्नातः पुण्यगन्धिर्भवति ॥ १ ॥

( गोपथब्राह्मणात् २-२ )

## * आत्मज्ञान-महिमा *

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु । य एषोऽन्त-र्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्म्मणा भूयान्नो एव असाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भे-दाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा-ऽनाशकेनैतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः । स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥ २२ ॥

( बृहदारण्यकोपनिषदः ४-४-२२ )

## * आत्मज्ञानेन मोक्षाधिगमः *

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ १ ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ २ ॥
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ३ ॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ४ ॥
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारञ्चाधिगच्छति ॥ ५ ॥
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ६ ॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ॥ ७ ॥
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ ८ ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ९ ॥
एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १० ॥
उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गम्पथस्तत्कवयो वदन्ति ॥ ११ ॥
अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसन्नित्यमगन्धवच्च यत् ।
अनाद्यनन्तम्महतः परन्ध्रुवं
निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १२ ॥

( कठोपनिषदः ३-१ )

## * वर्षावर्णनम् *

अयं स कालः संप्राप्तः समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैः संवृतं गिरिसंनिभैः ॥ १ ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ २ ॥
शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः ।
कुटजाऽर्जुनमालाभिरलंकर्तुं दिवाकरः ॥ ३ ॥
संध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ४ ॥
मेघोदरविनिर्मुक्ताः कर्पूरदलशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ॥ ५ ॥
मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ ६ ॥
कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् ।
अन्तस्तनितनिर्घोषं सवेदनमिवाऽम्बरम् ॥ ७ ॥
रजःप्रशान्तं सहिमोऽद्य वायु-
र्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ॥ ८ ॥
क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित्क्वचित्पर्वतसंनिरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ ९ ॥
व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥ १० ॥

रसाकुलं षट्पदसंनिकाशं प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम् ॥ ११ ॥

विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसंनिकाशाः ।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥ १२ ॥

वर्षोदकाऽऽप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि ।
वनानि निर्वृष्टबलाहकानि पश्याऽपराह्णेष्वधिकं विभान्ति ॥ १३ ॥

समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ १४ ॥

मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपंक्तिः ।
वातावधूता वरपौण्डरीकी लम्बेव माला रुचिराऽम्बरस्य ॥ १५ ॥

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुपृक्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥ १६ ॥

जाता वनान्ताः शिखिसुप्रनृत्ता जाताः कदम्बाः सकदम्बशाखाः ।
जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥ १७ ॥

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवंगाः ॥ १८ ॥

प्रहर्षिताः केतकिपुष्पगन्धमाघ्राय मत्ता वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ १९ ॥

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ २० ॥

अङ्गारचूर्णोत्करसंनिकाशैः फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखा निपीयमाना इव षट्पदौघैः ॥ २१ ॥

तडित्पताकाभिरलंकृतानामुदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां रणोत्सुकानामिव वानराणाम् ॥ २२ ॥

मार्गानुगः शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य।
युद्धाभिकामः प्रतिनादशङ्की मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥ २३ ॥
क्वचित्प्रगीता इव षट्पदौघैः क्वचित्प्रनृत्ता इव नीलकण्ठैः।
क्वचित्प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ २४ ॥
मुक्तासमाभं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम्।
हृष्टा विवर्णच्छदना विहंगाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ २५ ॥
षट्पादतन्त्रीमधुराभिधारं प्लवंगमोदीरितकण्ठतालम्।
आविष्कृतं मेघमृदङ्गनादैर्वनेषु संगीतमिव प्रवृत्तम् ॥ २६ ॥
क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः।
व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥ २७ ॥
स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसंनिरुद्धाम्।
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥ २८ ॥
नीलेषु नीला नववारिपूर्णा मेघेषु मेघाः प्रतिभान्ति सक्ताः।
दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः ॥ २९ ॥
प्रमत्तसंनादितबर्हिणानि सशक्रगोपाकुलशाद्वलानि।
चरन्ति नीपार्जुनवासितानि गजाः सुरम्याणि वनान्तराणि ॥ ३० ॥
नवाम्बुधाराहतकेसराणि ध्रुवं परित्यज्य सरोरुहाणि।
कदम्बपुष्पाणि सकेसराणि नवानि हृष्टा भ्रमराः पिबन्ति ॥ ३१ ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विक्रान्ततरा मृगेन्द्राः।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ३२ ॥
मेघाः समुद्धूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः।
नदीस्तडागानि सरांसि वापीर्महीं च कृत्स्नामपवाहयन्ति ॥ ३३ ॥
वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णवेगाः।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलं विप्रतिपन्नमार्गाः ॥ ३४ ॥

नरैर्नरेन्द्रा इव पर्वतेन्द्राः सुरेन्द्रनीतैः पवनोपनीतैः ।
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥ ३५ ॥
घनोपगूढं गगनं न तारा न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता तमोविलिप्ता न दिशः प्रकाशाः ॥ ३६ ॥
महान्ति कूटानि महीधराणां धाराविधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ३७ ॥
शैलोपलप्रस्खलमानवेगाः शैलोत्तमानां विपुलाः प्रपाताः ।
गुहासु संनादितबर्हिणासु हारा विकीर्यन्त इवावभान्ति ॥ ३८ ॥
शीघ्रं प्रवेगा विपुलाः प्रपाताः निर्धौतशृङ्गोपतला गिरीणाम् ।
मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्संगतलैर्ध्रियन्ते ॥ ३९ ॥

( श्री वाल्मीकि-रामायणस्य
किष्किन्धाकाण्ड-२८-सर्गात् )

## * शरद्वर्णनम् *

शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याऽद्य शरत्प्रवृत्ता ॥ १ ॥
संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मीः शरत्कालगुणोपपन्ना ।
सूर्याऽग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥ २ ॥
सप्तच्छदानां कुसुमोपगन्धी षट्पादवृन्दैरनुगीयमानः ।
मत्तद्विपानां पवनानुसारी दर्पं विनेष्यन्नधिकं विभाति ॥ ३ ॥
अभ्यागतैश्चारुविशालपक्षैः स्मरप्रियैः पद्मरजोविकीर्णैः ।
महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः ॥ ४ ॥
मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ५ ॥

नभः समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ।
प्रियास्वरक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥ ६ ॥
मनोज्ञगन्धैः प्रियकैरनल्पैः पुष्पाग्रभाराऽवनताऽग्रशाखैः ।
सुवर्णगौरैर्नयनाभिरामैरुद्योतितानीव वनान्तराणि ॥ ७ ॥
प्रियान्वितानां नलिनीप्रियाणां वनप्रियाणां कुसुमोद्गतानाम् ।
मदोत्कटानां मदलालसानां गजोत्तमानां गतयोऽद्य मन्दाः ॥ ८ ॥
व्यक्तं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि ।
कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥९॥
सूर्याऽऽतपक्रामणनष्टपङ्का भूमिश्चिरोद्घाटितसान्द्ररेणुः ।
अन्योन्यवैरेण समायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥ १० ॥
शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुत्थिताङ्गाः ।
मदोत्कटाः संप्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥ ११ ॥
त्यक्त्वा वराण्यात्मविभूषितानि बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमना मयूराः ॥ १२ ॥
वित्रास्य कारण्डवचक्रवाकान्महारवैर्भिन्नकटा गजेन्द्राः ।
सरःसु बद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥ १३ ॥
व्यपेतपंकासु सबालुकासु प्रसन्नतोयासु सगोकुलासु ।
ससारसाऽऽरावविनादितासु नदीषु हंसा निपतन्ति हृष्टाः ॥ १४ ॥
नदीघनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम् ।
प्लवंगमानां च गतोत्सवानां ध्रुवं रवाः संप्रति संप्रनष्टाः ॥ १५ ॥
अनेकवर्णाः सुविनष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः ।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः ॥ १६ ॥
विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपंक्तिः ।
नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥ १७ ॥
सुप्तैकहंसं कुमुदैरुपेतं महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवाऽन्तरिक्षम् ॥ १८ ॥

प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाऽद्य लक्ष्मी र्वरांगनानामिव भूषितानाम् ॥ १९ ॥
वेणुस्वरव्यञ्जिततूर्यमिश्रः प्रत्यूषकालेऽनिलसंप्रवृत्तः ।
संमूर्च्छितो गह्वरगोवृषाणामन्योन्यमापूरयतीव शब्दः ॥ २० ॥
नवैर्नदीनां कुसुमप्रहासै र्व्याधूयमानैर्मृदुमारुतेन ।
धौताऽमलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥ २१ ॥
वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥ २२ ॥
जलं प्रसन्नं कुसुमप्रहासं क्रौञ्चस्वनं शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥ २३ ॥
लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥२४॥
प्रसन्नसलिलाः सौम्य कुररीऽभिविनादिताः ।
चक्रवाकगणाकीर्णा विभान्ति सलिलाऽऽशयाः ॥ २५ ॥
अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज ।
उद्योगसमयः सौम्य पार्थिवानामुपस्थितः ॥ २६ ॥

( श्री वाल्मीकि-रामायणस्य
किष्किन्धाकाण्ड ३० सर्गात् )

## * हेमन्तवर्णनम् *

वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तत ॥ १ ॥
स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययाऽवभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥

प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन्भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥

अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ! ।
अलंकृत इवाऽऽभाति येन संवत्सरः शुभः ॥ ४ ॥

नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥

नवाऽऽग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताऽऽग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥

प्राज्यकामा जनपदाः संपन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ७ ॥

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥ ८ ॥

प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान्हिमवान्गिरिः ॥ ९ ॥

अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्या श्छायासलिलदुर्भगाः ॥ १० ॥

मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११ ॥

निवृत्ताऽऽकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतराऽऽयामा स्त्रियामा यान्ति सांप्रतम् ॥ १२ ॥

रविसंक्रान्त सौभाग्य स्तुषाराऽरुणमण्डलः ।
निःश्वासाऽन्ध इवाऽऽदर्शश्चन्द्रमा न प्रकाशते ॥ १३

ज्योत्स्नातुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातऽऽपश्यामा लक्ष्यते न च शोभते ॥ १४ ॥

प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥

वाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥

खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः ॥ १७ ॥

मयूखैरुपसर्पद्भि र्हिमनीहारसंवृतैः ।
दूरमप्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥

आग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संसक्तः किंचिदापाण्डु रातपः शोभते क्षितौ ॥ १९ ॥

अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमि र्निविष्टतरुणातपा ॥ २० ॥

स्पृशन्सुविपुलं शीत मुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥

एते हि समुपासीना विहगा जलचारिणः ।
नाऽवगाहन्ति सलिल मप्रगल्भा इवाऽऽहवम् ॥ २२ ॥

अवश्यायतमोनद्धा नीहारतमसाऽऽवृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥

वाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भान्ति सांप्रतम् ॥ २४ ॥

( श्री वाल्मीकि रामायणस्य )

( अरण्यकाण्ड १६ सर्गात् )

## * चन्द्रवर्णनम् *

ततः स मध्यंगतमंशुमन्तं ज्योत्स्ना वितानं मुहुरुद्वमन्तम् ।
ददर्श धीमान्भुवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १ ॥
लोकस्य पापानि विनाशयन्तं महोदधिं चाऽपि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशु मथाऽभियान्तम् ॥ २ ॥
या भांति लक्ष्मीर्भुवि मन्दरस्था यथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३ ॥
हंसो यथा राजतपञ्जरस्थः सिंहो यथा मन्दरकंदरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थ श्चन्द्रोऽपि बभ्राज तथाऽम्बरस्थः ॥ ४ ॥
स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाऽचलः श्वेत इवोर्ध्वशृङ्ग. ।
हस्तीव जाम्बूनदबद्धशृङ्गो विभाति चन्द्रः परिपूर्णशृङ्गः ॥ ५ ॥
विनष्टशीताऽम्बुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवाञ्छशाङ्कः ॥ ६ ॥
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र स्तथा प्रकाशो विरराज चन्द्रः ॥ ७ ॥

(श्री वाल्मीकि रामायणस्य)
सुन्दरकाण्ड ५म सर्गात्



# * श्रीकृष्णार्जुनसंवादः *

## प्रथमोऽध्यायः

### धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाँडवाश्चैव किमकुर्वत संजयः ॥ १ ॥

### संजय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां पाँडुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्चद्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः कशिराजश्च वीर्यवान् ।
पुरुजित्कुंतिभोजश्च शैब्यश्चनर पुंगवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्चवीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ! ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥
भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥
अपर्याप्तं तदस्माकं बलं भीष्माऽभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाऽभिरक्षितम् ॥ १० ॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षंतु भवंतः सर्व एव हि ॥ ११ ॥
तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ १२ ॥
ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यंत स शब्द स्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतै र्हयै र्युक्ते महति स्यन्दने स्थितौ ।
माधवः पांण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥ १४ ॥
पाँचजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौंड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकि श्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ! ।
सौभद्रश्च महाबाहुः शंखान्दध्मुः पृथक्पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पांडवः ॥ २० ॥

## अर्जुन उवाच

हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ! ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एते ऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

## संजय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ! ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ ! पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥
तत्राऽपश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६ ॥
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौंतेयः सर्वान्बंधूनवस्थितान् ॥ २७ ॥
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

## अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ॥ २८ ॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥
गाँडीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

निमित्तानि च पश्यामि विपरीतानि केशव ! ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥
न कांक्षे विजयं कृष्ण ! न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा ॥ ३२ ॥
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबंधिनस्तथा ॥ ३४ ॥
एतान्न हंतुमिच्छामि घ्नतोऽपि मधुसूदन ! ।
अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते ॥ ३५ ॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ! ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥
तस्मान्नार्हा वयं हंतुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ! ॥ ३७ ॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ! ॥ ३९ ॥
कुलक्षये प्रणश्यंति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥
अधर्माऽभिभवात्कृष्ण ! प्रदुष्यति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसंकरः ॥ ४१ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यंते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ! ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राजसुखलोभेन हंतुं स्वजन मुद्यताः ॥ ४४ ॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥

### संजय उवाच

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥
॥ इति प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः

### संजय उवाच

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेऽऽक्षणम् ।
विषीदंतमिदं वाक्य मुवाच मधुसूदनः ॥ १ ॥

### श्री भगवानुवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्य मकीर्तिकरमर्जुन ! ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ ! नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ! ॥ ३ ॥

### अर्जुन उवाच

कथं भीष्ममहं संख्ये द्रोणं च मधूसूदन ! ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ! ॥ ४ ॥

गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वाऽर्थकामांस्तु गुरूनिहैव भुंजीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥
न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषामस्ते ऽवस्थिताः संमुखे धार्तराष्ट्राः ॥ ६ ॥
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥
न हि प्रपश्यामि ममाऽपनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

संजय उवाच

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत !
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

श्री भगवानुवाच

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचंति पंडिताः ॥ ११ ॥
न त्वेवाऽहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहांतरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥
मात्रास्पर्शास्तु कौंतेय ! शीतोष्णसुखदुःखदाः।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत ! ॥ १४ ॥
यं हि न व्यथयंत्येते पुरुषं पुरुषर्षभ !।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्याऽस्य न कश्चित्कर्तुमर्हति ॥ १७ ॥
अंतवंत इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युद्धयस्व भारत ॥ १८ ॥
य एनं वेत्ति हंतारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १६ ॥
न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो,
न हन्यते हन्यमाने शरीरे ॥ २० ॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हंति कम् ॥ २१ ॥
वासांसि जीर्णानि यथा विहाय,
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥
नैनं छिंदंति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥
अव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो ! नैनं शोचितुमर्हसि ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत !
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत !
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥
स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ॥
सुखिनः क्षत्रियाः पार्थ ! लभन्ते युद्धमीदृशम् ॥ ३२ ॥
अथचेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥
अकीर्तिं चापि भूतानि कथयिष्यंति तेऽव्ययाम् ।
संभावितस्य चाकीर्ति र्मरणादतिरिच्यते ॥ ३४ ॥
भयाद्रणादुपरतं मंस्यंते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥
अवाच्यवादांश्च बहून्वदिष्यंति तवाऽहिताः ।
निंदंतस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौंतेय ! युद्धाय कृतनिश्चयः ॥ ३७ ॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

एषा ते ऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ ! कर्मबन्धं प्रहास्यसि ॥ ३९ ॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥
व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन !
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥
यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीतिवादिनः ॥ ४२ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवाऽर्जुन !
निर्द्वंद्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥
योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय !
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबंधविनिर्मुक्ताः पदं गच्छंत्यनामयम् ॥ ५१ ॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

## अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव !
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

## श्री भगवानुवाच

प्रजहाति यदा कामा न्सर्वान्पार्थ ! मनोगतान् ।
आत्मन्यैवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीं मुनिरुच्यते ॥ ५६ ॥

यः सर्वत्रानभिस्नेह स्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनंदति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

यदा संहरते चायं कूर्मोऽगानीव सर्वशः ।
इन्द्रियांणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

विषया विनिवर्तंते निराहारस्य देहिनः ।
रसवर्जं रसोप्यस्य परंदृष्ट्वा निवर्त्तते ॥ ५९ ॥

यततो ह्यपि कौंतेय ! पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरंति प्रसभं मनः ॥ ५० ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

ध्यायतो विषयान्पुंसःसंगस्तेषूपजायते ।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥

क्रोधाद्भवतिसंमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥
नास्ति बुद्धिरयुक्तस्य न चाऽयुक्तस्य भावना ।
न चाऽभावयतः शांति रशांतस्य कुतः सुखम् ॥ ६६ ॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवांऽभसि ॥ ६७ ॥
तस्माद्यस्य महाबाहो ! निगृहीतानि सर्वशः ।
इन्द्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥
आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशंति यद्वत् ।
तद्वत्कामा यं प्रविशंति सर्वे स शांतिमाप्नोति न कामकामी॥७०॥
विहाय कामान्यः सर्वा न्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शांनिमधिगच्छति ॥ ७१ ॥
एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामंतकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२ ॥

( इति भगवद्गीतायाः द्वितीयोऽध्यायः
श्री व्यासकृतमहाभारतात् )

## * सुशब्द–प्रयोग–महिमा *

यस्तु प्रयुङ्क्ते कुशलो विशेषे,
शब्दान् यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र,
वाग्योगविद्दुष्यति चाऽपशब्दैः ॥

दुरितैरपि कर्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत् ।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २ ॥

अनुभूय वसिष्ठसंभृतैः सलिलैस्तेन सहाऽभिषेचनम् ।
विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३ ॥

स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः
पवनाऽग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥

रघुमेव निवृत्तयौवनं तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान्गुणानपि ॥ ५ ॥

अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव संगतम् ।
पदमृद्धमजेन पैतृकं विनयेनाऽस्य नवं च यौवनम् ॥ ६ ॥

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ७ ॥

अहमेव मतो महीपते रिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशते ष्वभवन्नाऽस्य विमानना क्वचित् ॥ ८ ॥

न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।
स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ ९ ॥

अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥ १० ॥

गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥

प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुलाम् उदिताऽर्केण समारुरोह तत् ॥ १२ ॥

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयाऽर्थयो र्भुवमंशाविव धर्मयोर्गतौ ॥ १३ ॥

अजिताऽधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदै रजः ।
अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः ॥ १४ ॥

नृपतिः प्रकृतीरवेक्षितुं व्यवहाराऽऽसनमाददे युवा ।
परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम् ॥ १५ ॥

अनयत्प्रभुशक्तिसंपदा वशमेको नृपतीननन्तरान् ।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥ १६ ॥

अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥ १७ ॥

पणबन्धमुखान्गुणानजः षडुपायुंक्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥ १८ ॥

न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः ।
न च योगविधेर्नवेतरः स्थिरधीरापरमात्मदर्शनात् ॥ १९ ॥

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयाऽपवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥ २० ॥

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः ।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥ २१ ॥

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित् ॥ २२ ॥

स परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।
शमिताऽधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥ २३ ॥

क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।
प्रथमा बहुरत्नसूरभूद् अपरा वीरमजीजनत्सुतम् ॥ २४ ॥

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकंठारिगुरुं विदुर्बुधाः ॥ २५ ॥

ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ २६ ॥

**बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।**
**वसु तस्य विभोर्न केवलं गुणवत्ताऽपि परप्रयोजना ॥ २७ ॥**

ततः कदाचिदसौ चिदसौख्यनिवृत्तय शरदिन्दुकान्तिकान्तया कान्तयेन्दुमत्या समं परमाभिरामं नगराऽऽरामं कमपि जगाम । तत्र च वियति यतो यतिपतेर्नारदस्य वीणाप्राञ्जवनपवनवशनिपतितपारिजात प्रसूनस्रजोरसि तरसा ताडिता तडितेव मालतीलता, मरुतेव दीपदशा, पयोभृतेव कौमुदी निमिमील किल राजमहिषी ।

अथ तथाविधप्रियजनविप्रयोगजन्येनाऽन्यूनमन्युनाऽनभ्रवज्रपातेनेव शतधाविदीर्णहृदयो गुरुणा संसारसाराऽसारताप्रदर्शनपैर रुपदेशवचनैः सिद्धाञ्जनैरिव पुनः पुनरुन्मील्यमानलोचनोऽपि दूयमानमानसः कथंकथमपि प्रकृष्टकष्टादतिवाहितहायनाष्टकोऽवतीर्णतारुण्यं तनयं नयविनयविशेषशोभिन मप्रतिहतरथं दशरथं नियुज्य राज्यचिन्तायां प्रायोपवेशनकृतमति र्गतधृति र्नृपतिः सुरसरित्सरय्वोर्हृदयङ्गमे संगमे नश्वरशरीरव्ययेनाव्यय मियाय पदमित्यत्रत्यावशिष्ठ कथांश संक्षेपः ।

( "श्री वागीश्वर विद्यालंकार
विरचिता चूर्णिकेयम् )

इत्यष्टमः सर्गः

## नवमः सर्गः

**पितुरनन्तरमुत्तरकोसलान् समधिगम्य समाधिजितेन्द्रियः ।**
**दशरथः प्रशशास महारथो यमवतामवतां च धुरि स्थितः ॥ १ ॥**

**अधिगतं विधिवद्यदपालयत् प्रकृतिमण्डलमात्मकुलोचितम् ।**
**अभवदस्य ततो गुणवत्तरं सनगरं नग-रन्ध्रकरौजसः ॥ २ ॥**

उभयमेव वदन्ति मनीषिणः समयवृद्धिक्रमा कृतकर्मणाम् ।
बलनिषूदनमर्थपतिं च तं श्रम-नुदं मनु-दण्ड-धराऽन्वयम् ॥ ३ ॥

जनपदे न गदः पदमादधा वभिभवः कुत एव सपत्नजः ।
क्षितिरभूत्फलवत्यजनन्दने शम-रतेऽमर-तेजसि पार्थिवे ॥ ४ ॥

दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम् ।
तमधिगम्य तथैव पुनर्बभौ न न महीनमहीन-पराक्रमम् ॥ ५ ॥

समतया वसुवृष्टिविसर्जनै र्नियमनादसतां च नराधिपः ।
अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ॥ ६ ॥

न मृगयाऽभिरतिर्न दुरोदरं न च शशिप्रतिमाऽऽभरणं मधु ।
तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत् ॥ ७ ॥

न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि ।
न च सपत्नजनेष्वपि तेन वाग् अपरुषा परुषाऽक्षरमीरिता ॥ ८ ॥

उदयमस्तमयं च रघूद्वहाद् उभयमानशिरे वसुधाधिपाः ।
स हि निदेशमलंघयतामभूत् सुहृदयो-हृदयः प्रतिगर्जताम् ॥ ९ ॥

अजयदेकरथेन स मेदिनी मुदधिनेमि मधिज्यशरासनः ।
जयमघोषयदस्य तु केवलं गजवती जव-तीव्र-हया चमूः ॥ १० ॥

अवनि मेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवा घन-रवा नरवाहनसंपदः ॥ ११ ॥

शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरंदरः ।
स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नव-तामरसाऽऽननः ॥ १२ ॥

चरणयो र्नखरागसमृद्धिभि र्मुकुटरत्नमरीचिभि रस्पृशन् ।
नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम् ॥ १३ ॥

निववृते स महार्णवरोधसः सचिवकारितबालसुताऽञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहान् अनलकानलकाऽनवमां पुरीम् ॥ १४ ॥

उपगतोऽपि च मण्डलनाभितामू अनुदिताऽन्यसिताऽऽतपवारणः।
श्रियमवेक्ष्य स रन्ध्रचलामभूद् अनलसोऽनल-सोम-समद्युतिः ॥१५॥
तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता।
नृपतिमन्वमसेवत देवता स-कमला कमलाघवमर्थिषु ॥ १६ ॥
तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः।
मगधकोसलकेकयशासिनां दुहितरोऽहित-रोपित-मार्गणम् ॥ १७ ॥
प्रियतमाभिरसौ तिसृभि र्बभौ तिसृभिरेव भुवं सह शक्तिभिः।
उपगतो विनिनीषुरिव प्रजा हरि-हयोऽरिहु-योग-विचक्षणः ॥ १८ ॥
स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः।
स्वभुजवीर्यमगापयदुच्छ्रितं सुर-वधूरवधूत-भयाः शरैः ॥ १९ ॥
क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः।
कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसा-सरयूतटाः ॥ २० ॥
अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम्।
अधिवसंस्तनुमध्वरदीक्षिताम् असमभासमभासयदीश्वरः ॥ २१ ॥
अवभृथप्रयुतो नियतेन्द्रियः सुर-समाज-समाक्रमणोचितः।
नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २२ ॥
असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता।
दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥

इति नवमः सर्गः

## दशमः सर्गः।

पृथिवीं शासतस्तस्य पाकशासनतेजसः।
किंचिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥
न चोपलेभे पूर्वेषाम् ऋणनिर्मोक्षसाधनम्।
सुताऽभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥ २ ॥

अतिष्ठत्प्रत्ययापेक्ष-संततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्त-रत्नोत्पत्तिरिवार्णवः ॥ ३ ॥
ऋष्यश्रृङ्गादयस्तस्य सन्तः संतानकांक्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥
अथ तस्य विशांपत्यु रन्ते काम्यस्य कर्मणः ।
पुरुषः प्रबभूवाऽग्ने र्विस्मयेन सहर्त्विजाम् ॥ ५ ॥
हेमपात्रगतं दोर्भ्याम् आदधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ६ ॥
प्राजापत्योपनीतं तदु अन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारम् आविष्कृतमुदन्वता ॥ ७ ॥
अनेन कथिता राज्ञो गुणास्तस्यान्य दुर्लभाः ।
प्रसूतिं चक्रमे तस्मिन् त्रैलोक्यप्रभवोऽपि यत् ॥ ८ ॥
स तेजो वैष्णवं पत्न्यो र्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रम् अहर्पतिरिवाऽऽतपम् ॥ ९ ॥
अर्चिता तस्य कौसल्या, प्रिया केकयवंशजा ।
अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ १० ॥
ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।
चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ११ ॥
सा हि प्रणयवत्यासीत् सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ॥ १२ ॥
ताभि र्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभि रमृताख्याभिरम्मयः ॥ १३ ॥
सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।
अन्तर्गतफलारम्भाः सस्यानामिव संपदः ॥ १४ ॥

अथाऽग्र्यमहिषी राज्ञः प्रसूतिसमये सति।
पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ १५ ॥
राम इत्यभिरामेण वपुषा तस्य चोदितः।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ १६ ॥
रघुवंशप्रदीपेन तेनाऽप्रतिमतेजसा।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाऽभवन् ॥ १७ ॥
शय्यागतेन रामेण माता शातोदरी बभौ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ १८ ॥
कैकेय्या स्तनयो जज्ञे भरतो नाम शीलवान्।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ १९ ॥
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ २० ॥
निर्दोषमभवत्सर्व माविष्कृतगुणं जगत्।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ २१ ॥
तस्योदये चतुर्मूर्त्तेः पौलस्त्यचकितेश्वराः।
विरजस्कैर्नभस्वद्भि र्दिश उच्छ्वसिता इव ॥ २२ ॥
कृशानुरपधूमत्वात् प्रसन्नत्वात्प्रभाकरः।
रक्षोविप्रकृतावास्ताम् अपविद्धशुचाविव ॥ २३ ॥
दशाननकिरीटेभ्य स्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ २४ ॥
पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः।
आरम्भं प्रथमं चक्रु र्देवदुन्दुभयो दिवि ॥ २५ ॥
संतानकमयी वृष्टि र्भवने चाऽस्य पेतुषी।
सन्मङ्गलोपचाराणां सैवाऽऽदिरचनाऽभवत् ॥ २६ ॥

कुमाराः कृतसंस्कारा स्ते धात्रीस्तन्यपायिनः ।
आनन्देनाऽग्रजेनेव समं ववृधिरे पितुः ॥ २७ ॥

स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा ।
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ २८ ॥

परस्पराऽविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्द्योतयामासु र्देवाऽरण्यमिवर्तवः ॥ २९ ॥

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः॥ ३० ॥

तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वो र्यथा चन्द्रसमुद्रयोः ॥ ३१ ॥

ते प्रजानां प्रजानाथा स्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघाऽन्ते श्यामाऽभ्रा दिवसा इव ॥ ३२ ॥

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणाम् अवतार इवाऽङ्गवान् ॥ ३३ ॥

गुणैराराधयामासु स्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ३४ ॥

सुरगज इव दन्तैर्भग्नदैत्याऽसिधारै
र्नयइव पणबन्धव्यक्तयोगै रुपायैः ।
हरिरिव युगदीर्घै र्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ३५ ॥

इति दशमः सर्गः

## एकादशः सर्गः ।

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचित स्तेजसां हि न वयः समीक्ष्यते ॥ १ ॥
कृच्छ्रलब्धमपि लब्धवर्णभाक् तं दिदेश मुनये सलक्ष्मणम् ।
अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता ॥ २ ॥
यावदादिशति पार्थिवस्तयो र्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशुविदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥
तौ निदेशकरणोद्यतौ पितु र्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतो र्नम्रयोरुपरि बाष्पबिन्दवः ॥ ४ ॥
तौ पितुर्नयनजेन वारिणा किंचिदुक्षितशिखण्डकावुभौ ।
धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ ॥ ५ ॥
लक्ष्मणाऽनुचरमेव राघवं नेतुमैच्छदृषिरित्यसौ नृपः ।
आशिषं प्रयुयुजे न वाहिनीं सा हि रक्षणविधौ तयोः क्षमा ॥ ६ ॥
मातृवर्गचरणस्पृशौ मुने स्तौ प्रपद्य पदवीं महौजसः ।
रेजतुर्गतिवशात्प्रवर्तिनौ भास्करस्य मधुमाधवाविव ॥ ७ ॥
वीचिलोलभुजयोस्तयोर्गतं शैशवाच्चपलमप्यशोभत ।
तोयदाऽऽगम इवोद्ध्यभिद्ययो र्नामधेयसदृशं विचेष्टितम् ॥ ८ ॥
तौ बलाऽतिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्तिनाविव ॥ ९ ॥
पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत् ॥ १० ॥
तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्रिणः ।
वायवः सुरभिपुष्परेणुभि श्छायया च जलदाः सिषेविरे ॥ ११ ॥
नाऽम्भसां कमलशोभिनां तथा शाखिनां च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥ १२ ॥

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथि रात्तकार्मुकः।
विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा ॥ १३ ॥

तौ सुकेतुसुतया खिलीकृते कौशिकाद्विदितशापया पथि।
निन्यतुः स्थलनिवेशिताऽटनी लीलयैव धनुषी अधिज्यताम् ॥ १४ ॥

ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाछविः।
ताडका चलकपालकुण्डला कालिकेव निबिडा बलाकिनी ॥ १५ ॥

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया।
अभ्यभावि भरताऽग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १६ ॥

उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषाऽन्त्रमेखलाम्।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः ॥ १७ ॥

यच्चकार विवरं शिलाघने ताडकोरसि स रामसायकः।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥ १८ ॥

बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम्।
विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत् ॥ १९ ॥

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २० ॥

आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पिताऽर्हणम्।
बद्धपल्लवपुटाऽञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥ २१ ॥

तत्र दीक्षितमृषिं ररक्षतुः विघ्नतो दशरथात्मजौ शरैः।
लोकमन्धतमसात्क्रमोदितौ रश्मिभिः शशिदिवाकराविव ॥ २२ ॥

वीक्ष्य वेदिमथ रक्तबिन्दुभि र्बन्धुजीवपृथुभिः प्रदूषिताम्।
संभ्रमोऽभवदपोढकर्मणाम् ऋत्विजां च्युतविकङ्कतस्रुचाम् ॥ २३ ॥

उन्मुखः सपदि लक्ष्मणाऽग्रजो बाणमाश्रयमुखात्समुद्धरन्।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २४ ॥

तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत्स नेतरान् ।
किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते ॥ २५ ॥

सोऽस्त्रमुग्रजवमस्त्रकोविदः संदधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत् पाण्डुपत्रमिव ताडकासुतम् ॥ २६ ॥

यः सुबाहुरिति राक्षसोऽपर स्तत्र तत्र विससर्प मायया ।
तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः ॥ २७ ॥

इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपते र्यथाक्रमं वाग्यतस्य निरवर्तयन्क्रियाः ॥ २८ ॥

तौ प्रणामचलकाकपक्षकौ भ्रातराववभृथाऽऽप्लुतो मुनिः ।
आशिषामनुपदं समस्पृशद् दर्भपाटिततलेन पाणिना ॥ २९ ॥

तं न्यमन्त्रयत संभृतक्रतु मैथिलः; स मिथिलां व्रजन्वशी ।
राघवावपि निनाय बिभ्रतौ तद्धनुः-श्रवणजं कुतूहलम् ॥ ३० ॥

राघवाऽन्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं सपर्यया देहबद्धमिव धर्ममभ्यगात् ॥ ३१ ॥

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥ ३२ ॥

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयांबभूव सः ॥ ३३ ॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥ ३४ ॥

अब्रवीच्च भगवन् ! मतंगजै र्यद्बृहद्भिरपि कर्म दुष्करम् ।
तत्र नाऽहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् ॥ ३५ ॥

ह्रेपिता हि बहवो नरेश्वरा स्तेन तात ! धनुषा धनुर्भृतः ।
ज्यानिघातकठिनत्वचो भुजान् स्वान्विधूय धिगिति प्रतस्थिरे ॥ ३६ ॥

प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयम्—अथवा, गिरा कृतम्।
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥ ३७ ॥

एवमाप्तवचनात्स पौरुषं काकपक्षकधरेऽपि राघवे।
श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥ ३८ ॥

व्यादिदेश गणशोऽथ पार्श्वगान् कार्मुकाऽभिहरणाय मैथिलः।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ३९ ॥

तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः।
विद्रुतक्रतुमृगाऽनुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४० ॥

आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रमीक्षितः।
शैलसारमपि नाऽतियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४१ ॥

भज्यमानमतिमात्रकर्षणात् तेन वज्रपरुषस्वनं धनुः।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४२ ॥

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ ४३ ॥

मैथिलः सपदि सत्यसंगरो राघवाय तनयामयोनिजाम्।
संनिधौ द्युतिमतस्तपोनिधे रग्निसाक्षिक इवाऽतिसृष्टवान् ॥ ४४ ॥

प्राहिणोच्च महितं महाद्युतिः कोसलाऽधिपतये पुरोधसम्।
भृत्यभावि दुहितुः परिग्रहाद् दिश्यतां कुलमिदं निमेरिति ॥ ४५ ॥

अन्वियेष सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग्द्विजः।
सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि कांक्षितम् ॥ ४६ ॥

तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान्वचनमग्रजन्मनः।
उच्चचाल बलभित्सखो वशी सैन्यरेणुमुषिताऽर्कदीधितिः ॥ ४७ ॥

तौ समेत्य समये स्थितावुभौ भूपती वरुणवासवोपमौ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ४८ ॥

पृथिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ४९ ॥
ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।
सामदानविधिभेदविग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५० ॥
ता नराधिपसुता नृपात्मजै स्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ॥ ५१ ॥
एवमात्तरतिरात्मसंभवांन् तान्निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५२ ॥
तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनीम् उत्तटा इव नदीरयाः स्थलीम् ॥ ५३ ॥
लक्ष्यते स्म तदनन्तरं रवि र्बद्धभीमपरिवेशमण्डलः ।
वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः ॥ ५४ ॥
श्येनपक्षपरिधूसरालकाः सांध्यमेघरुधिराऽऽर्द्रवाससः ।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ॥ ५५ ॥
भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववाशिरे ।
क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः ॥ ५६ ॥
तत्प्रतीपपवनाऽऽदि वैकृतं प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित् ।
अन्वयुङ्क्तगुरुमीश्वरः क्षितेः स्वन्त मित्यलघयत्स तद्व्यथाम् ॥ ५७ ॥
तेजसः सपदि राशिरुत्थितः प्रादुरास किल वाहिनीमुखे ।
यः प्रमृज्य नयनानि सैनिकै र्लक्षणीयपुरुषाऽऽकृतिश्चिरात् ॥ ५८ ॥
पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत् ।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ ५९ ॥
येन रोषपरुषात्मनः पितुः शासने स्थितिभिदोऽपि तस्थुषा ।
वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही ॥ ६० ॥
अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः ।
क्षत्रियाऽन्तकरणैकविंशते र्व्याजपूर्वगणनामिवोद्वहन् ॥ ६१ ॥

तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवं स्वां दशां च विषसाद पार्थिवः ॥ ६२ ॥
नाम राम इति तुल्यमात्मजे वर्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाऽभवद् रत्नजातमिव हारसर्पयोः ॥ ६३ ॥
अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताऽग्रजो यतः ।
क्षत्रकोपदहनाऽर्चिषं ततः संदधे दृशमुदग्रतारकाम् ॥ ६४ ॥
तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।
अङ्गुली विवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ६५ ॥
क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टनाद् रोषितोऽस्मि तव विक्रमश्रवात् ॥ ६६ ॥
मैथिलस्य धनुरन्यपार्थिवै स्त्वं किलाऽनमितपूर्वमक्ष्णोः ।
तन्निशम्य भवता समर्थये वीर्यशृङ्गमिव भग्नमात्मनः ॥ ६७ ॥
अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।
व्रीडमावहति मे स संप्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥ ६८ ॥
बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्सहरणाच्च हैहय स्त्वं च कीर्तिमपहर्तुमुद्यतः ॥ ६९ ॥
क्षत्रियाऽन्तकरणोऽपि विक्रम स्तेन मामवति नाऽजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥ ७० ॥
विद्धि चाऽऽत्तबलमोजसा हरेः ऐश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ७१ ॥
तन्मदीयमिदमायुधं ज्यया संगमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ७२ ॥
कातरोऽसि यदि वोद्गताऽर्चिषा तर्जितः परशुधारया मम ।
ज्यानिघातकठिनांगुलि वृथा बध्यतामभययाचनाऽञ्जलिः ॥ ७३ ॥
एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताऽधरः ।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ७४ ॥

पूर्वजन्मधनुषा समागतः सोऽतिमात्रलघुदर्शनोऽभवत् ।
केवलोऽपि सुभगो नवाऽम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ॥ ७५ ॥
तेन भूमिनिहितैककोटि तत् कार्मुकं च बलिनाऽधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः ॥ ७६ ॥
तावुभावपि परस्परस्थितौ वर्धमान-परिहीनतेजसौ ।
पश्यति स्म जनता दिनाऽत्यये पार्वणौ शशिदिवाकराविव ॥ ७७ ॥
तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघमाशुगं, व्याजहार हरसूनुसंनिभः ॥ ७८ ॥
न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्रिणा हन्मि लोकमुत ते मखाऽर्जितम् ॥ ७९ ॥
प्रत्युवाच तमृषिर्न तत्त्वत स्त्वां न वेद्मि पुरुषं पुरातनम् ।
गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया दिदृक्षुणा ॥ ८० ॥
भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥ ८१ ॥
तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे ।
पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥ ८२ ॥
प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत् स्वर्गमार्गपरिघो दुरत्ययः ॥ ८३ ॥
राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन्समस्पृशत् ।
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये ॥ ८४ ॥
राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥ ८५ ॥
साधयाम्यहमविघ्नमस्तु ते देवकार्य मुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाऽग्रजमृषिस्तिरोदधे ॥ ८६ ॥

तस्मिन्गते विजयिनं परिरभ्य रामं,
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याऽभवत्क्षणशुचः परितोषलाभः,
कक्षाऽग्निलंघिततरोरिव वृष्टिपातः ॥ ८७ ॥
अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये,
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां,
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ ८८ ॥

इत्येकादशः सर्गः

—:०:—

## द्वादशः सर्गः ।

निर्विष्टविषयस्नेहः स दशान्त मुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपाऽर्चिरिवोषसि ॥ १ ॥
तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाऽऽह पलितच्छद्मना जरा ॥ २ ॥
सा पौरान्पौर-कान्तस्य रामस्याऽभ्युदयश्रुतिः ।
प्रत्येकं ह्लादयांचक्रे कुल्येवोद्यानपादपान् ॥ ३ ॥
तस्याऽभिषेकसंभारं कल्पितं क्रूरनिश्चया ।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४ ॥
सा किलाऽऽश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ताभूर्बिलमग्नाविवोरगौ ॥ ५ ॥
तयोश्चतुर्दशैकेन रामं प्राऽव्राजयत्समाः ।
द्वितीयेन सुतस्यैच्छद् वैधव्यैकफलां श्रियम् ॥ ६ ॥

पित्रा दत्तां रुदन्रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाऽऽज्ञां मुदितोऽग्रहीत् ॥ ७ ॥

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशु र्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८ ॥

स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकाऽरण्यं प्रत्येकं च सतां मनः ॥ ९ ॥

राजाऽपि तद्वियोगाऽऽर्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १० ॥

विप्रोषितकुमारं तद् राज्यमस्तमितेश्वरम् ।
रन्ध्राऽन्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११ ॥

अथाऽनाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासु र्भरतं स्तम्भिताऽश्रुभिः ॥ १२ ॥

श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत्पराङ्मुखः ॥ १३ ॥

ससैन्यश्चाऽन्वगाद्रामं दर्शितानाश्रमाऽऽलयैः ।
तस्य पश्यन्ससौमित्रे रुदश्रु र्वसतिद्रुमान् ॥ १४ ॥

चित्रकूटवनस्थं च कथितस्वर्गतिं गुरोः ।
लक्ष्म्या निमन्त्रयांचक्रे तमनुच्छिष्टसंपदा ॥ १५ ॥

स हि प्रथमजे तस्मिन् अकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६ ॥

तमशक्यमपाक्रष्टुं निदेशात्स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात् कर्तुं राज्याऽधिदेवते ॥ १७ ॥

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाऽविशत्पुरीम् ।
नन्दिग्रामगत स्तस्य राज्यं न्यासमिवाभुनक् ॥ १८ ॥

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाऽकरोत् ॥ १९ ॥
रामोऽपि सह वैदेह्या वने वन्येन वर्तयन् ।
चचार साऽनुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥ २० ॥
रामस्त्वाऽऽसन्नदेशत्वाद् भरताऽऽगमनं पुनः ।
आशङ्क्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ ॥ २१ ॥
प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ २२ ॥
बभौ तमनुगच्छन्ती विदेहाऽधिपतेः सुता ।
प्रतिषिद्धाऽपि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥ २३ ॥
अनसूयाऽतिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराऽङ्गरागेण पुष्पोच्चलितषट्पदम् ॥ २४ ॥
संध्याऽभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥ २५ ॥
स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिम् अवग्रह इवाऽन्तरे ॥ २६ ॥
तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाऽशुचिना चेति वसुधायां निचख्नतुः ॥ २७ ॥
पञ्चवट्यां ततो रामः शासनात्कुम्भजन्मनः ।
अनपोढस्थितिस्तस्थौ विन्ध्याऽद्रिः प्रकृताविव ॥ २८ ॥
रावणाऽवरजा तत्र राघवं मदनाऽऽतुरा ।
अभिपेदे निदाघाऽऽर्ता व्यालीव मलयद्रुमम् ॥ २९ ॥
सा सीतासंनिधावेव तं वव्रे कथिताऽन्वया ।
अत्याऽऽरूढो हि नारीणाम् अकालज्ञो मनोभवः ॥ ३० ॥

कलत्रवानहं बाले ! कनीयांसं भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥ ३१ ॥

ज्येष्ठाऽभिगमनात्पूर्वं तेनाऽप्यनभिनन्दिता ।
साऽभूद्रामाऽऽश्रया भूयो नदीवोभयकूलभाक् ॥ ३२ ॥

संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥ ३३ ॥

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् ।
मृग्याः परिभवो व्याघ्रयाम् इत्यवेहि त्वया कृतम् ॥ ३४ ॥

इत्युक्त्वा मैथिलीं भर्तु रङ्के निविशतीं भयात् ।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत ॥ ३५ ॥

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चाद् बुबुधे विकृतेति ताम् ॥ ३६ ॥

पर्णशालामथ क्षिप्रं विकृष्टाऽसिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥ ३७ ॥

सा वक्रनखधारिण्या वेणुकर्कशपर्वया ।
अङ्कुशाऽऽकारयाऽङ्गुल्या तावतर्जयदम्बरे ॥ ३८ ॥

प्राप्य चाऽऽशु जनस्थानं खराऽऽदिभ्यस्तथाविधम् ।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ॥ ३९ ॥

मुखाऽवयवलूनां तां नैर्ऋता यत्पुरो दधुः ।
रामाऽभियायिनां तेषां तदेवाऽभूदमङ्गलम् ॥ ४० ॥

उदाऽऽयुधानाऽऽपततस्तान्दृप्तान्प्रेक्ष्य राघवः ।
निदधे विजयाऽऽशंसां चापे सीतां च लक्ष्मणे ॥ ४१ ॥

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाऽऽजौ तावांश्च ददृशे स तैः ॥ ४२ ॥

अलज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाऽऽचारः स दूषणमिवाऽऽत्मनः ॥ ४३ ॥

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ।
क्रमशस्ते पुनस्तस्य चापात्सममिवोद्ययुः ॥ ४४ ॥

तैस्त्रयाणां शितैर्बाणैर्यथापूर्वविशुद्धिभिः ।
आयुर्देहाऽतिगैः पीतं रुधिरं तु पतत्रिभिः ॥ ४५ ॥

तस्मिन्रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किंचन ॥ ४६ ॥

सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ४७ ॥

राघवाऽस्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् ॥ ४८ ॥

निग्रहात्स्वसुराप्तानां बधाच्च धनदाऽनुजः ।
रामेण निहितं मेने पदं दशसु मूर्धसु ॥ ४९ ॥

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्र-प्रयासक्षणविघ्नितः ॥ ५० ॥

तौ सीताऽन्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्तिभिः ॥ ५१ ॥

स रावणहृतां ताभ्यां वचसाऽऽचष्ट मैथिलीम् ।
आत्मनः सुमहत्कर्म व्रणैराऽऽवेद्य संस्थितः ॥ ५२ ॥

तयोस्तस्मिन्नवीभूत-पितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात् परा ववृतिरे क्रियाः ॥ ॥ ५३ ॥

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५४ ॥

स हत्वा बालिनं वीर स्तत्पदे चिरकांक्षिते ।
धातोः स्थान इवाऽऽदेशं सुग्रीवं संन्यवेशयत् ॥ ५५ ॥

इतस्ततश्च वैदेही मन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५६ ॥

प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ५७ ॥

दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ५८ ॥

तस्यै भर्तुरभिज्ञानम् अङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवाऽनुष्णै स्तदाऽऽनन्दाऽश्रुबिन्दुभिः ॥ ५९ ॥

निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धतः ।
स ददाह पुरीं लङ्कां क्षणसोढाऽरिनिग्रहः ॥ ६० ॥

प्रत्यभिज्ञानरत्नं च रामायाऽदर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ६१ ॥

श्रुत्वा रामः प्रियोदन्तं मेने तत्संगमोत्सुकः ।
महाऽर्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६२ ॥

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि संबाधवर्तिभिः ॥ ६३ ॥

निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ॥ ६४ ॥

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६५ ॥

स सेतुं बन्धयामास प्लवगैर्लवणाऽम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ ६६ ॥

तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हैमप्राकारं कुर्वद्भिरिव वानरैः ॥ ६७ ॥

रण प्रववृते तत्र भीमः प्लवगरक्षसाम् ।
दिग्विजृम्भितकाकुत्स्थ-पौलस्त्यजयघोषणः ॥ ६८ ॥

पादपाऽऽविद्धपरिघः शिलानिष्पिष्टमुद्गरः ।
अतिशस्त्रनखन्यासः शैलरुग्णमतगजः ॥ ६९ ॥

अथ रामशिरश्छेद-दर्शनोद्भ्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ ७० ॥

कामं, जीवति मे नाथ इति सा विजहौ शुचम् ।
प्राङ्मत्वा सत्यमस्याऽन्तं जीविताऽस्मीति लज्जिता ॥ ७१ ॥

गरुडाऽऽपातविश्लिष्ट मेघनादाऽस्त्रबन्धनः ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाऽभवत् ॥ ७२ ॥

ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीद् विदीर्णहृदयः शुचा ॥ ७३ ॥

स मारुतिसमानीत-महौषधिहतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाऽऽचार्यकं शरैः ॥ ७४ ॥

स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किंचित्पर्यशेषयत् ॥ ७५ ॥

कुम्भकर्णः कपीन्द्रेण तुल्याऽवस्थः स्वसुः कृतः ।
रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ७६ ॥

अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
रामेषुभिरितीवाऽसौ दीर्घनिद्रां प्रवेशितः ॥ ७७ ॥

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥ ७७ ॥

निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावण मरामं वा जगदद्येति निश्चितः ॥ ७६ ॥

रामं पदातिमालोक्य लङ्केशं च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रजिघाय पुरंदरः ॥ ८० ॥

तमाऽऽधूतध्वजपटं व्योमगङ्गोर्मि वायुभिः ।
देवसूतभुजाऽऽलंबी जैत्रमध्यास्त राघवः ॥ ८१ ॥

मातलिस्तस्य माहेन्द्रम् आमुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैब्यम् अस्त्राण्यापुः सुरद्विषाम् ॥ ८२ ॥

अन्योन्यदर्शनप्राप्त-विक्रमावसरं चिरात् ।
रामरावणयोर्युद्धं चरितार्थमिवाऽभवत् ॥ ८३ ॥

भुजमूर्धोरुबाहुल्याद् एकोऽपि धनदाऽनुजः ।
ददृशे ह्ययथापूर्वो मातृवंश इव स्थितः ॥ ८४ ॥

जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम् ।
राम स्तुलितकैलासम् अरातिं बह्वमन्यत ॥ ८५ ॥

रावणस्याऽपि रामाऽस्तो भित्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुम् उरगेभ्य इव प्रियम् ॥ ८६ ॥

वचसैव तयोर्वाक्यम्, अस्त्रमस्त्रेण निघ्नतोः ।
अन्योन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ८७ ॥

विक्रमव्यतिहारेण सामान्याऽभूद् द्वयोरपि ।
जयश्रीरन्तरा वेदि मत्तवारणयोरिव ॥ ८८ ॥

कृतप्रतिकृतप्रीतै स्तयोर्मुक्तां सुराऽसुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ८९ ॥

अय शंकुचितां रक्षः शतघ्नीमथ शात्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ ९० ॥

राघवो रथमप्राप्तां तामाशां च सुरद्विषाम् ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ॥९१॥

अमोघं संदधे चाऽस्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोक-शल्यनिष्कर्षणौषधम् ॥ ९२ ॥
तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९३ ॥
तेन मन्त्रप्रयुक्तेन निमेषाऽर्धादपातयत् ।
स रावणशिरःपंक्तिम् अज्ञातव्रणवेदनाम् ॥ ९४ ॥
बालाऽर्कप्रतिमेवाऽप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥९५॥
मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नाऽतिविशश्वास पुनः संधानशंकिनाम् ॥ ९६ ॥

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥ ९७ ॥
यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्यम् ।
नामाऽङ्कराबणशराऽङ्कितकेतुयष्टि-
मूर्ध्वं रथं हरिसहस्रयुजं निनाय ॥ ९८ ॥
रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां,
प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनाऽनुयातः ससौमित्रिणा
भुजविजितविमानरत्नाऽधिरूढः प्रतस्थे पुरीम् ॥ ९९ ॥

इति द्वादशः सर्गः

## त्रयोदशः सर्गः ।

अथाऽऽत्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाऽभिधानो हरिरित्युवाच ॥१॥

वैदेहि ! पश्याऽऽमलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नम् आकाशमाविष्कृतचारुतारम् ॥ २ ॥

गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरङ्गे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलाऽयं परिवर्धितो नः ॥ ३ ॥

गर्भं दधत्यर्कमरीचयोऽस्माद् विवृद्धिमत्राश्नुवते वसूनि ।
अबिन्धनं वह्निमसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥ ४ ॥

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।
विष्णोरिवाऽस्यानवधारणीयम् ईदृक्तया रूपमियत्तया वा ॥ ५ ॥

नाभिप्ररूढाऽम्बुरुहाऽऽसनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ६ ॥

पक्षच्छिदा गोत्रभिदाऽऽत्तगन्धाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७ ॥

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।
अस्याऽच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राऽऽभरणं बभूव ॥ ८ ॥

स-सत्त्वमादाय नदीमुखाऽम्भः संमीलयन्तो विवृताऽऽननत्वात् ।
अमी शिरोभिस्तिमयः सरन्ध्रैः ऊर्ध्वं वितन्वन्ति जलप्रवाहान् ॥९॥

मातङ्गनक्रैः सहसोत्पतद्भिः भिन्नान्द्विधा पश्य समुद्रफेनान् ।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम् ॥ १० ॥

वेलाऽनिलाय प्रसृता भुजङ्गा महोर्मिविस्फूर्जथुनिर्विशेषाः ।
सूर्यांऽशुसंपर्कसमृद्धरागैः व्यज्यन्त एते मणिभिः फणस्थैः ॥ ११ ॥

प्रवृत्तमात्रेण पयांसि पातुम् आवर्तवेगाद् भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥ १२ ॥
दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेः धारानिबद्धेव कलङ्करेखा ॥ १३ ॥
एते वयं सैकतभिन्नशुक्ति-पर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात् कूलं फलाऽऽवर्जितपूगमालम् ॥ १४ ॥
कुरुष्व तावत्करभोरु ! पश्चान् मार्गे मृगप्रेक्षिणि ! दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात् सकानना निष्पततीव भूमिः ॥ १५ ॥
क्वचित्पथा संचरते सुराणां क्वचिद्घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥ १६ ॥
असौ महेन्द्रद्विपदानगन्धिः त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थान् आचामति स्वेदलवान्मुखे ते ॥ १७ ॥
अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥ १८ ।
सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविंद-विश्लेषदुःखादिव बद्धमौनम् ॥ १९ ॥
त्वं रक्षसा भीरु ! यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
अदर्शयन्वक्तुमशक्नुवत्यः शाखाभिराऽऽवर्जितपल्लवाभिः ॥ २० ॥
मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षाः तवाऽगतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्याम् उत्पक्ष्मराजीनि विलोचनानि ॥२१॥
एतद्गिरेर्माल्यवतः पुरस्ताद् आविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २२ ॥
गन्धश्च धाराऽऽहतपल्वलानां कादम्बमर्धोद्गतकेसरं च ।
स्निग्धाश्च केकाः शिखिनां बभूवुः यस्मिन्नसह्यानि विना त्वया मे ॥२३

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥ २४ ॥

अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिंकिणीनाम् ।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपंक्तयस्त्वाम् ॥ २५ ॥

एषा त्वया पेशलमध्ययाऽपि घटाऽम्बुसंवर्धितबालचूता ।
आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात्पञ्चवटी मनो मे ॥ २६ ॥

भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।
तस्याऽविलाम्भः परिशुद्धिहेतोः भौमो मुनेः स्थानपरिग्रहोऽयम् ॥२७॥

त्रेताऽग्निधूमाग्रमनिन्द्यकीर्तेः तस्येदमाऽऽक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ २८ ॥

हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ २९ ॥

धारास्वनोद्गारिदरीमुखोऽसौ शृंगाऽग्रलग्नाऽम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि ! चक्षुः दृप्तः ककुद्मानिव चित्रकूटः ॥ ३० ॥

एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ ३१ ॥

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाऽङ्कुराऽऽपाण्डुकपोलशोभी मयाऽवतंसः परिकल्पितस्ते ॥ ३२ ॥

अनिग्रहत्रासविनीतसत्त्वम् अपुष्पलिंगात्फलबन्धिवृक्षम् ।
वनं तपःसाधनमेतदत्रेः आविष्कृतोदग्रतरप्रभावम् ॥ ३३ ॥

अत्राऽभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्तयामास किलाऽनसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ३४ ॥

वीरासनैर्ध्यानजुषामृषीणाम् अमी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ३५ ॥

क्वचित्प्रभालेपिभिरिन्द्रनीलैः मुक्तामयी यष्टिरिवाऽनुविद्धा ।
अन्यत्र माला सितपङ्कजानाम् इन्दीवरैरुत्खचितान्तरेव ॥ ३६ ॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ३७ ॥
क्वचित्प्रभा चान्द्रमसी तमोभिः छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवाऽऽलक्ष्यनभः प्रदेशा ॥ ३८ ॥
क्वचिच्च कृष्णोरगभूषणेव भस्माऽऽङ्गरागा तनुरीश्वरस्य ।
पश्याऽनवद्याङ्गि ! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ ३९ ॥
जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरंगमेधाऽवभृथाऽवतीर्णैः इक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ४० ॥
यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।
सामान्यधात्रीमिव मानसं मे संभावयत्युत्तरकोसलानाम् ॥ ४१ ॥
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयू वियुक्ता ।
दूरे वसन्तं शिशिराऽनिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ४२ ॥
विरक्तसंध्याकपिशं पुरस्ताद् यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ४३ ॥
अद्धा श्रियं पालितसंगराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन् संरक्षितां त्वामिव लक्ष्मणो मे ॥४४॥
असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणि भरतोऽभ्युपैति ॥ ४५ ॥

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीक्षितं प्रकृतिभिर्भरताऽनुगाभिः ॥ ४६ ॥

तस्मात्पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ४७ ॥

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य-
स भ्रातरं भरतमर्घ्यपरिग्रहाऽन्ते ।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
तद्भक्त्यपोढपितृराज्यमहाऽभिषेके ॥ ४८ ॥

श्मश्रुप्रवृद्धिजनिताऽऽननविक्रियाँश्च
प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान् ।
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातै-
र्वार्ताऽनुयोगमधुराऽक्षरया च वाचा ॥ ४९ ॥

दुर्जातबन्धुरयमृक्षहरीश्वरो मे,
पौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्याऽऽदृतेन कथितौ रघुनन्दनेन,
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ५० ॥

सौमित्रिणा तदनु संससृजे स चैन-
मुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन-
क्लिश्यन्निवाऽस्य भुजमध्य मुरःस्थलेन ॥ ५१ ॥

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति साऽवरजो विमानम् ।
दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापति स्तरलविद्युदिवाऽभ्रवृन्दम् ॥ ५२ ॥

तत्रेश्वरेण जगतां प्रलयादिवोर्वी-
पर्यात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रा-
त्प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ५३ ॥

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्
वन्द्यं युगं चरणयोर्जनकाऽऽत्मजायाः ।
ज्येष्ठाऽनुवृत्तिजटिलं च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य ॥ ५४ ॥

क्रोशाऽर्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमित–जवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः
साकेतोपवनमुदारमध्युवास ॥ ५५ ॥

इति त्रयोदशः सर्गः ।

## चतुर्दशः सर्गः ।

भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरो व्रतत्यौ ॥ १ ॥

उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ ।
विस्पष्टमस्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥

आनन्दजः शोकजमश्रु बाष्प स्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाऽद्रिनिस्यन्द इवाऽवतीर्णः ॥ ३ ॥

ते पुत्रयोर्नैर्ऋतशस्त्रमार्गान् आर्द्रानिवाऽङ्गे सदयं स्पृशन्त्यौ ।
अपीप्सितं क्षत्रकुलाऽङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४ ॥

क्लेशाऽऽवहा भर्तुरलक्षणाऽहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यौ अभक्तिभेदेन वधू ववन्दे ॥ ५ ॥

उत्तिष्ठ वत्से ! ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियाऽर्हां तामूचतु स्ते प्रियमप्यमिथ्या ॥ ६ ॥

अथाऽभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलै र्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धाः तीर्थाऽऽहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्याऽऽपतन्मूर्ध्नि जलानि जिष्णोः विन्ध्यस्य मेघप्रभवा इवाऽऽपः॥८॥

तपस्विवेशक्रिययाऽपि तावद् यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा तस्योदिताऽऽसीत्पुनरुक्तदोषा ॥ ९ ॥

स मौलरक्षोहरिभिः ससैन्यः तूर्यस्वनाऽऽनन्दितपौरवर्गः ।
विवेश सौधोद्गतलाजवर्षाम् उत्तोरणामन्वयराजधानीम् ॥ १०॥

सौमित्रिणा साऽवरजेन मन्दम् आधूतबालव्यजनो रथस्थः ।
धृताऽऽतपत्रो भरतेन साक्षाद् उपायसंघात इव प्रवृद्धः ॥ ११ ॥

प्रासादकालागुरुधूमराजिः तस्याः पुरो वायुवशेन भिन्ना ।
वनान्निवृत्तेन रघूत्तमेन मुक्ता स्वयं वेणिरिवाऽऽबभासे ॥ १२ ॥

श्वश्रूजनाऽनुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम् ।
प्रासादवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥

स्फुरत्प्रभामण्डलमानसूयं सा बिभ्रती शाश्वतमङ्गरागम् ।
रराज शुद्धेति पुनः स्वपुर्यै संदर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥

वेश्मानि रामः परिबर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेतम् आलेख्यशेषस्य पितु र्विवेश ॥ १५ ॥

कृताञ्जलिस्तत्र-यदम्ब ! सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः ।
तच्चिन्त्यमानं सुकृतं तवेति जहारलज्जां भरतस्य मातुः ॥ १६ ॥

तथैव सुग्रीवविभीषणादीन् उपाचरत्कृत्रिमसंविधाभिः ।
संकल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन ॥ १७ ॥

सभाजनायोपगतान्स दिव्यान् मुनीन्पुरस्कृत्य हतस्य शत्रोः ।
शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानम् ॥ १८ ॥

प्रतिप्रयातेषु तपोधनेषु सुखादविज्ञातगतार्धमासान् ।
सीतास्वहस्तोपहृताग्र्यपूजान्रक्षःकपीन्द्रान्विससर्ज रामः ॥ १९ ॥

तच्चात्मचिंतासुलभं विमानं हृतं सुरारेः सह जीवितेन ।
कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २० ॥

पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः ।
धर्मोऽर्थकामेषु समां प्रपेदे यथा तथैवाऽवरजेषु वृत्तिम् ॥२१॥

सर्वासु मातृष्वपि वत्सलत्वात् स निर्विशेषप्रतिपत्तिरासीत् ।
षडाननाऽऽपीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ २२ ॥

तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान् ।
तेनाऽऽस लोकः पितृमान्विनेत्रा तेनैव शोकाऽपनुदेन पुत्री ॥ २३ ॥

अथाऽधिकस्निग्धविलोचनेन मुखेन सीता शरपाण्डुरेण ।
आनन्दयित्री परिणेतुरासीद् अनक्षरव्यञ्जितदोहदेन ॥ २४ ॥

सा दृष्टनीवारबलीनि हिंस्रैः संबद्धवैखानसकन्यकानि ।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि ॥ २५ ॥

तस्यै प्रतिश्रुत्य रघुप्रवीरः तदीप्सितं पार्श्वचराऽनुयातः ।
आलोकयिष्यन्मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह ॥ २६ ॥

ऋद्धाऽऽपणं राजपथं स पश्यन् विगाह्यमानां सरयूं च नौभिः ।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥ २७ ॥

स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्पाऽधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजिताऽरिभद्रः ॥ २८ ॥

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव ! देव्याः ॥ २९ ॥

कलत्रनिन्दागुरुणा किलैवम् अभ्याहतं कीर्तिविपर्ययेण ।
अयो-घनेनाऽय इवाऽभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३० ॥

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सन्त्यजामि ।
इत्येकपक्षाऽऽश्रयविक्लवत्वाद् आसात्स दोलाचलचित्तवृत्तिः ॥३१॥

निश्चित्य चाऽनन्यनिवृत्तिवाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥ ३२ ॥

स संनिपात्याऽवरजान्हतौजा स्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३३ ॥

राजर्षिवंशस्य रविप्रसूतेः उपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥ ३४ ॥

पौरेषु सोऽहं बहुलीभवन्तम् अपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३५ ॥

तस्याऽपनोदाय फलप्रवृत्तौ उपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव ॥ ३६ ॥

अवैमि चैनामनघेति किंतु लोकापवादो बलवान् मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनाऽऽरोपिता शुद्धिमतः प्रजाभिः ॥३७॥

रक्षोवधाऽन्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकांक्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥३८॥

तदेष सर्गः करुणार्द्रचित्तै र्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः ॥३९॥

इत्युक्तवन्तं जनकात्मजायां नितान्तरुक्षाऽभिनिवेशमीशम् ।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ॥ ४० ॥

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः ।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश ॥ ४१ ॥

प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥ ४२ ॥

स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तद् आज्ञा गुरूणां ह्यविचारणीया ॥ ४३ ॥

अथाऽनुकूलश्रवणप्रतीताम् अत्रस्नुभिर्युक्तधुरं तुरङ्गैः ।
रथं सुमन्त्रप्रतिपन्नरश्मिम् आरोप्य वैदेहसुतां प्रतस्थे ॥ ४४ ॥

सा नीयमाना रुचिरान्प्रदेशान् प्रियंकरो मे प्रिय इत्यनन्दत् ।
नाऽबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४५ ॥

जुगूह तस्याः पथि लक्ष्मणो यत् सव्येतरेण स्फुरता तदक्ष्णा ।
आख्यातमस्यै गुरु भावि दुःखम् अत्यन्तलुप्तप्रियदर्शनेन ॥ ४६ ॥

सा दुर्निमित्तोपगताद्विषादात् सद्यः परिम्लानमुखाऽरविन्दा ।
राज्ञः शिवं साऽवरजस्य भूयाद् इत्याशशंसे करणैरबाह्यैः ॥ ४७ ॥

गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन् ।
अवार्यतेवोत्थितवीचिहस्तैः जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ ४८ ॥

रथात्स यन्त्रा निगृहीतवाहात् तां भ्रातृजायां पुलिनेऽवतार्य ।
गङ्गां निषादाहृतनौविशेषः ततार संधामिव सत्यसंधः ॥ ४९ ॥

अथ व्यवस्थापितवाक्कथंचित् सौमित्रिरन्तर्गतबाष्पकण्ठः ।
औत्पातिको मेघ इवाऽश्मवर्षं महीपतेः शासनमुज्जगार ॥ ५० ॥

ततोऽभिषङ्गाऽनिलविप्रविद्धा प्रभ्रश्यमानाऽऽभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ ५१ ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्यवृत्तः ।
इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥ ५२ ॥

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥ ५३ ॥

न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥ ५४ ॥

आश्वास्य रामावरजः सतीं ताम् आख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि! क्षमस्वेति बभूव नम्रः ॥ ५५ ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीताऽस्मि ते सौम्य! चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ ५६ ॥

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ५७ ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ ५८ ॥

कल्याणबुद्धेरथवा तवाऽयं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ ५९ ॥

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयाऽतिरोषात् सोढाऽस्मि न त्वद्भवने वसन्ती ॥ ६० ॥

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६१ ॥

किं वा तवाऽत्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजः त्वदीयमन्तर्गतमन्तरायः ॥ ६२ ॥

साऽहं तपः सूर्यनिविष्टदृष्टिः ऊर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननाऽऽन्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥ ६३ ॥

नृपस्य वर्णाऽऽश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः।
निर्वासिताऽप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया ॥ ६४ ॥

तथेति तस्याः प्रतिगृह्य वाचं रामाऽनुजे दृष्टिपथं व्यतीते।
सा मुक्तकण्ठं व्यसनाऽतिभारात् चक्रन्द विग्ना कुररीव भूयः ॥ ६५ ॥

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभावम् अत्यन्तमासीद्रुदितं वनेऽपि ॥ ६६ ॥

तामभ्यगच्छद्रुदिताऽनुसारी कविः कुशेध्माऽऽहरणाय यातः।
निषादविद्धाऽण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ६७ ॥

तमश्रु नेत्राऽऽवरणं प्रमृज्य सीता विलापाद्विरता ववन्दे।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राऽऽशिषमित्युवाच ॥ ६८ ॥

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्याऽपवादक्षुभितेन भर्त्रा।
तन्मा व्यथिष्ठा विषयाऽन्तरस्थं प्राप्ताऽसि वैदेहि ! पितुर्निकेतम् ॥ ६९ ॥

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तौ अस्त्येव मन्युर्भरताग्रजे मे ॥ ७० ॥

तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनाऽसि ममाऽनुकम्प्या ॥७१॥

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसाऽस्मिन्।
इतो भविष्यत्यनघप्रसूतेः अपत्यसंस्कारमयो विधिस्ते ॥ ७२ ॥

अशून्यतीरां मुनिसंनिवेशैः तमोपहन्त्रीं तमसां वगाह्य।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः ॥ ७३ ॥

पुष्पं फलं चाऽऽर्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि।
विनोदयिष्यन्ति नवाऽभिषंगाम् उदारवाचो मुनिकन्यकास्त्वाम् ॥७४॥

पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलाऽनुरूपैः।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥ ७५ ॥

अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयाऽऽर्द्रचेताः ।
सायं मृगाऽध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥ ७६ ॥

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोः अन्त्यां कलां दर्श इवौषधीषु ॥ ७७ ॥

ता इंगुदीस्नेहकृतप्रदीपम् आस्तीर्णमेध्याऽजिनतल्पमन्तः ।
तस्यै सपर्याऽनुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ ७८ ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनाऽतिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासंततये बभार ॥ ७९ ॥

अपि प्रभुः सानुशयोऽधुना स्यात् किमुत्सुकः शक्रजितोऽपि हन्ता ।
शशंस सीतापरिदेवनान्तम् अनुष्ठितं शासनमग्रजाय ॥ ८० ॥

बभूव रामः सहसा सबाष्पः तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८१ ॥

निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमाऽवेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ॥ ८२ ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८३ ॥

( रघुवंश महाकाव्यात् )

इति चतुर्दशसर्गः

# अभिज्ञान शाकुन्तलचम्पूः

या सृष्टिःस्रष्टुराद्या, वहति विधिहुतं या हवि, र्या च होत्री,
ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति, यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

एकदा दुष्यन्तो नाम राजा मृगयां कर्तुं वनं जगाम । एके-नातिरंहसा मृगेण सुदूरमाकृष्टः सारथिमुवाच—"सूत ! कथमनुपतत एव मे मृगोऽयं प्रयत्नप्रेक्षणीयः संवृत्तः । अयमिदानीमपि—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः,
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा,
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति"॥ २॥

सूतोऽब्रवीत्—"आयुष्मन् ! उद्घातिनी भूमिरिति मया रश्मि-संयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यतीति" । ततो दुष्यन्ताऽऽज्ञया मुक्तेष्वभीषुषु धावतोऽश्वान्वीक्ष्य राजोवाच—

"मुक्तेषु रश्मिषु निरायतपूर्वकाया,
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया,
धावन्त्यमी मृगजवाऽक्षमयेव रथ्याः ॥ ३ ॥

सत्यमतीत्य हरितो हरीन् वर्तन्ते वाजिनः । तथाहि—

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलताम्,
यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात्" ॥ ४ ॥

एवमुक्त्वा मृगं व्यापादयितुं यावच्छरसंधानमकरोत्तावद्—“भो राजन् ! आश्रममृगोऽयं न हन्तव्यः न हन्तव्य” इत्युच्चै र्व्याहरन् वैखानसःसह द्वाभ्यामन्याभ्यां तपस्विभ्यां बाणपातवर्तिनः कृष्णसारस्यान्तर उपस्थितोऽवोचच्च—“तूलराशौ वह्निरिवास्मिन्मृदुनि मृगशरीरे बाणो नैव सन्निपात्यः । क्व बत हरिणकानामति लोलं जीवितं क्व च तव निशितनिपाता वज्रसाराः शराः ।

तत्साधुकृतसंधानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि” इति ॥ ५ ॥

ततोऽप्यदुन्तेन प्रतिसंहृते शरे वैखानसः पुनरुवाच—“पुरुवंशप्रदीपस्य भवतः सदृशमेवैतत्—

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि ॥ ६ ॥

“वयं समिदाहरणाय प्रस्थिताः, एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । नचेदन्यकार्यातिपातः, प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । कुलपतिः कण्वो दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं मिदानीमेव गतः । तत्र गत्वा—

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाऽङ्क इति ॥ ७ ॥

वयमपि साधयामोऽधुना" इति । राजा बभाषे–"सूत! चोदयाश्वान् । पुण्याऽऽश्रम दर्शनेन तावदात्मानं पुनीमहे । शकुन्तलां द्रक्ष्यामि । सा खलु विदितभक्ति मां महर्षेः कथयिष्यति"। ततः कतिचित्पदानि गत्वा समन्तादवलोक्य च राजा सूतमुवाच— "सूत ! अकथितोपि ज्ञायत एव यथायमाश्रमाभोगस्तपोवनस्य । किन्न पश्यति भवान् । इह हि—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः,
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा·
स्तोयाऽऽधारपथाश्च वल्कलशिखानिष्यन्दरेखाऽङ्किताः" ॥८॥

तपोवननिवासिनामुपरोधो मा भूदिति दूर एवाऽऽश्रमस्य रथं स्थापयित्वा राजाऽवातरत् । "विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम" इत्युक्त्वा दुष्यन्तः सूतायाभरणानि धनुश्चोपनीयार्पयत्, आज्ञापयामास च— "सूत ! यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः" इति । यदा दुष्यन्त आश्रमं प्रविवेश तदाऽस्य शुभाऽऽशंसी दक्षिणो बाहुः पस्पन्दे । सुशकुनस्यास्य सूचनया चकित स आत्मगतं चिंतयामास—

"शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहाऽस्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र" ॥ ९ ॥

तस्मिन्नेवक्षणे दक्षिणेन वृक्षवाटिकाम् "इत इतः सख्यौ" इत्या· लापमशृणोत् । तदा शकुन्तला सह प्रियंवदाऽनसूयाभिधानाभ्यां

सखीभ्यां स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातु तत्रैवागता ।

ता निपुणं निरूप्य तासां मधुरयाऽऽकृत्या विस्मितो दुश्यन्तश्छाया माश्रित्य प्रतिपालयन्स्थितः । अनसूयोवाच— "शकुन्तले ! त्वत्तोपि तातकाश्यपस्याऽऽश्रमवृक्षकाः प्रियतरा इति तर्कयामि, येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता" इति । शकुन्तला प्रत्यवदत्- "न केवलं तातनियोग एव, अस्ति मे सोदरस्नेह एतेषु" इति । अनेन संवादेन शकुन्तलां कण्वदुहितरं राजाऽजानात् । तदा सलिलसेकसंभ्रमोद्गतो मधुकरो नवमालिकामुज्झित्वा शकुन्तलाया वदनमभ्यवर्तत । भीता शकुन्तला— "परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेणाऽभिभूयमानाम्" इति व्याजहार । सख्यौ सस्मितं प्रोचतुः "के आवां परित्रातुम्" ? राजरक्षितव्यानि तपोवनानि नाम । तस्माद्दुष्यन्तमाक्रन्द" इति । "अवसरोऽयमात्मानंदर्शयितुम्" इति मत्वा दुष्यन्तः सत्वरमुपसृत्य व्याजहार— "न भेतव्यं न भेतव्यम्—

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु" ।। १० ।।

सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रांताः । ततोऽनसूयोवाच— "आर्य ! न किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता" इति । अनसूया पुनरपि दुष्यन्तं बभाषे-"आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते । कतम आर्येण राजर्षिवंशोऽलंक्रियते, कतमो वा विरहपर्युत्सुकजनः कृतो देशः, किन्निमित्तं वा सुकुमारतरोऽपि तपोवनागमनपरिश्रमस्याऽऽत्मा पदमुपनीतः" इति । आत्मापहारं कर्तुमिच्छन्, राजा प्रत्यवदत्-"यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः

सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः । अपि तपो वर्धते" ? शकुन्तला साध्वसादवचनाऽतिष्ठत् ।

अनसूया तं प्रत्युवाच—"इदानीमतिथिविशेषलाभेन धन्या वयम्। हला शकुन्तले ! गच्छोटजम् । फलमिश्रमर्घ्यमुपहर । इदं पादोदकं भविष्यति" । राजोवाच—"भवतीनां सूनृतयैव गिरा कृतमातिथ्यम्"। प्रियंवदाऽवदत् "तेनह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः । हलाशकुन्तले ! उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः" । ततः सर्वे वृक्षच्छायायामुपविष्टाः । अत्रान्तरे, "भोस्तपस्विनः ! सन्निहितास्तपोवनरक्षायै भवत, प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथाहि रेणु-
र्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणताऽरुणप्रकाशः,
शलभसमूह इवाऽऽश्रमद्रुमेषु ॥ ११ ॥

अपिच—

तीव्राऽऽघातप्रतिहततरुः स्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयाऽऽसंगसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो-
धर्मारण्यं प्रविशति गजः स्यन्दनाऽऽलोकभीतः" ॥ १२ ॥

इत्युच्चैराश्रमवासिनां वैखानसानामुक्तिः कर्णपथाऽतिथीकृता। तच्छ्रुत्वा राजात्मगतमूचे। "अहो धिक्, पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति। भवतु प्रतिगमिष्यामस्तावत्" इति । आरण्यकवृत्तान्तेन पर्याकुला अनसूया यदोटजगमनायानुज्ञा मयाचत तदा राजा—

"वयमपि, यथाऽऽश्रमपीड़ा न भविष्यति तथा प्रयतिष्यामहे" इत्युक्त्वा प्रतिनिवृत्तः । शकुन्तलाव्यापारादात्मानं निवर्तयितुमक्षमश्च मंदौत्सुक्यो नगरगमनं प्रति— "समेत्यानुयात्रिकान्नातिदूरे तपोवनस्य निवेशयेयम्" इति विचार्य च तत्रैवावस्थितः। ततो मृगयाशीलस्यराज्ञः प्रियवयस्यो विदूषको ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्य, निर्वेदमापन्नो राजानमुवाच— "प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां गात्राणामनीशोऽस्मि संवृत्तः। तत्प्रसीद, मामेकाहमपि विश्रमितुं विसृजेति"। राजापि शकुन्तलामनुस्मृत्य मृगयायां मन्दाऽऽदरः सेनापतिमाहूय निजगाद— "सेनापते ! मन्दोत्साहः कृतोऽस्मि मृगयापवादिना प्रियवयस्येन" इति। सेनापतिरब्रवीत्— "कोऽपरो मृगयासदृशो विनोदः। ननु प्रभुरेव निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः,
सत्वानामपि लक्ष्यते विकृतिमच्चित्तंभयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः" ॥ १३ ॥

आश्रमस्यात्यन्तसन्निकृष्टतया, राजा सेनापतेर्वचो नाभ्यनन्दत्, उवाच च—

"शमप्रधानेषु तपोधनेषु-
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजो ऽभिभवाद्वमन्ति ॥ १४ ॥

तेन हि निवर्तय पूर्वगतान्वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्या इति। अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धं क्रियतां वराहपतिभि र्मुस्ताक्षतिः पल्वले
विश्रामं लभता मिदश्च शिथिलज्याबन्धमस्मद्धनुः" ॥१५॥

तस्मिन्नेव क्षणे दर्शनार्थ मागतौ द्वावृषिकुमारौ राज्ञो दीप्तिमतोऽपि वपुषो विश्वसनीयतां प्रेक्ष्य विस्मितौ परस्परमूचतुः—

"अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्याऽपि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १६ ॥

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याऽधिज्ये धनुषि विजयं पौरुहूते च वज्रे" ॥ १७ ॥

ततो राज्ञे फलान्युपहारीकृत्य तं विज्ञापयामासतुः— "विदितो भवानाश्रमवासिनामिहस्थः । तेच—तत्र भवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति, तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति भवन्तं प्रार्थयन्ते" इति ।

राजा ऋषीणामभ्यर्थनां मानयित्वा सबाणकार्मुकं रथमारुह्य तपोवन मुपेयिवान् । प्रविष्टमात्र एव दुष्यन्ते निरुपप्लवानि तापसानां कर्माणि संवृत्तानि । तपोवनवासावसर एव शकुन्तला-

दुष्यन्तयोरनुरागः परस्परं पर्यचीयत। राजा च तस्याः पाणिं गान्धर्वविधिना जग्राह।

कदाचिदनसूया प्रियंवदामवादीत्–"इज्यारक्षां परिसमाप्य ऋषिभिर्विसर्जितो दुष्यन्त आत्मनोनगरं प्रविश्यान्तःपुरसमागतः शकुन्तलागतं वृत्तान्तं स्मरति वा न वेति"। सा तां प्रत्यवदत्— "सखि ! विश्रब्धा भव। न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। तातकाश्यपः पुनरिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति मे चिन्ता"। अनसूयया ऽभ्यधायि—"गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः तस्य संकल्पः। तं यदि दैवमेव सम्पादयति नन्वप्रयासेन कृतार्थो गुरुजनः। तस्मात्तातस्याऽनुमतंभवेदेतदित्यहं पश्यामीति"। तस्मिन्नेव क्षणे दुर्वासा ऋषिरात्मानमतिथित्वेन न्यवेदयत्। यद्यपि एकाकिन्येव शकुन्तलोटजसंनिहितासीत्तथाऽपिदुष्यन्तमेवध्यायन्ती अभ्यागतमृषिं प्रमादादतिथिसपर्यया न पर्यचरत्। सुलभकोपोऽसौ महर्षिस्तामशपत्—

"विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव" ॥१८

रोषाऽतिशयवशादुच्चैरुच्चरत्प्रलयघनघनगर्जितमिव तर्जितोत्तरं तत् शापवचनं दूरादेवाऽऽकर्ण्य महर्षौशकुन्तला मपराद्धां विज्ञाय-विज्ञापितोऽनसूयया दुर्वासाः- यद्, "भगवन् ! प्रथम इति प्रेक्ष्याऽविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैको ऽपराधो मर्षितव्य इति। ततो "न मे वचनमन्यथा भवितुमर्हति किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते" इति मन्त्रयित्वा दुर्वासा अन्तर्हितः।

यदा दुष्यन्तो राजधानीं प्रस्थितस्तदा तेन स्वनामधेयाऽङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेवापिनद्धमासीत्

तत्संस्मृत्य संजातकिञ्चिदाश्वासाभ्यां तत्सखीभ्यांनिश्चयः कृतो-यद्—"द्वयोरेवाऽऽवयोर्मुखे शापवृत्तान्त एष तिष्ठतु यतो रक्षितव्या प्रकृतिपेलवा प्रियसखीति" । अथ गते बहुतिथे कालेऽपि यदा दुष्यन्तो लेखमात्रमपि न व्यसृजत् तदोद्विग्ना ऽनसूया प्रियंवदया सहा ऽचिन्तयत्–"अभिज्ञानमङ्गुलीयकं राज्ञे प्रेषयामः । दुःखशीले-तपस्विजने कोऽभ्यर्थ्यताम् । ननु सर्वगामी दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्वां शकुन्तलां निवेदयितुमिति । इत्थंगतेऽस्माभिः किं नु खलु करणीयमिति" ।

यदा कण्वः प्रवासा न्निवृत्याग्निशरणं प्रविष्टस्तदा ऽशरीरिण्या वाण्या शकुन्तलागतो वृत्तान्तस्तस्मै कथितः । ततो लज्जावनतमुखीं शकुन्तलां परिष्वज्य कण्वेनैवमभिनन्दितं–"वत्से ! सुशिष्यपरिदत्तेव विद्याऽशोचनीयाऽसि मे संवृत्ता । अद्यैव ऋषिपरिरक्षितां त्वां भर्तुः-सकाशं विसर्जयामीति" । यावच्छकुन्तलाया अङ्गेष्वाभरणविनियोगं सख्यावकुरुतां तावत्स्नानोत्थितः कण्वोऽचिन्तयत्——

"यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः" ॥१९॥

ततोऽग्नीन् प्रदक्षिणीकृत्य प्रस्थितां शकुन्तलामवलोक्य तात-कण्वः स्नेहगद्गदकण्ठेन समीपवर्तिनस्तरून् प्रोवाच—"भोः भोः संनिहितास्तपोवनतरवः !

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नाऽऽदत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।

आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्" ॥२०॥

ततो लताभगिनीं वनज्योत्स्नां समामन्त्र्य त्रिचाणि पदानि प्रचलिता शकुन्तला केनचित् स्पर्शेन गतिभंगमनुभूय परावृत्याऽवलोक्याऽकथयत्–"को नु खल्वेष निवसने मे सजति"। तातः प्रत्यूचे—"वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते" ॥ २१ ॥

शकुन्तलाऽवोचत्—"वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि। अचिरप्रसूतया जनन्या विना विवर्द्धित एव। इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। तन्निवर्तस्व" इति रुदती प्रस्थिता। ततः कण्वोऽवादीत्—"वत्से ! अलं रुदितेन, स्थिरा भव, इतः पन्थानमवलोकय—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया विरतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति" ॥ २२ ॥

ततः सा सह पित्रा, शार्ङ्गरवादिभिः शिष्यैश्च, अग्रिमं पन्थानमगच्छत्। यदा कण्वः शकुन्तलां दूरमनुससार तदा शार्ङ्गरव उवाच—"भगवन् ! ओदकान्तात्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते,

तदिदं सरस्तीरम्। अत्र सन्दिश्य प्रतिगन्तुमर्हसीति"। यावत्कण्वो-दुष्यन्तस्याऽनुरूपं सन्देशमचिन्तयत्तावन्नलिनीपत्रान्तरितविग्रहमपि सहचरमद्दृष्ट्वा रटन्तीं चक्रवाकीं प्रेक्ष्य शकुन्तला दुर्निमित्तमिति मत्वा दुःखिता बभूव। कण्व उवाच—"शार्ङ्गरव ! त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः" ॥२३॥

ततः कण्वः शकुन्तलामनुशशास—"सा त्वमितः पतिकुलं प्राप्य—

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने, भाग्येष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याऽऽधयः"। इति ॥२४॥

ततः प्रस्थिता शकुन्तला "यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्म नामधेयांकितमंगुलीयकं दर्शय" इति सखीभ्या मुक्ता साऽऽशङ्कमुवाच– "अनेन वां सन्देहेनाकम्पितास्मीति"। सख्या वूचतुः–"मा बिभेहि"। स्नेहःपापशंकीति"। शकुन्तला सगद्गदमुवाच- "कथमिदानीं तातस्याऽङ्कात् परिभ्रष्टा मलयतरून्मूलिता चन्दनलता इव देशान्तरे जीवितं धारयिष्यामि"। कण्वो जगाद "वत्से ! किमेवं कातरासि—

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि" ॥ २५ ॥

शकुन्तला पितुः पादयोः पतित्वा तं ववन्दे । कण्वो-"वत्से ! यदहमिच्छामि ते तदस्तु" इति तमाशिषाऽयुङ्क्त। शकुन्तलाऽऽश्रमाभिमुखी भूत्वा पप्रच्छ-"तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये" इति । कण्व उवाच-"श्रूयताम्—

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्द्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन्" ॥ २६ ॥

शकुन्तला भूयः पितरमाश्लिष्य प्रार्थयामास— "तपश्चरणपीडितं तातशरीरम् तदलं मम कृतेऽतिमात्रमुत्कण्ठितुम्। काश्यपः सनिःश्वासमुवाच—

"शममेष्यति मम शोकः कथं नु वत्से ! त्वया रचितपूर्वम् ।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥ २७ ॥
गच्छ शिवास्तेपन्थानः सन्तु" ।

ततः शकुन्तला शार्ङ्गरवादिभिः सह प्रस्थिता । कण्वश्च सह प्रियंवदाऽनसूयाभ्यामाश्रमं प्रतिनिववृते, प्रतिनिवर्तमानश्च मेने-"स्नेहप्रवृत्तिरेवंदर्शिनी । हन्त भोः शकुन्तलां पतिगृहं विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः—

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममाऽयं विशदः प्रकामं प्रत्यर्पितन्यास इवाऽन्तरात्मा" ॥२८॥

अथैकदा राजाऽधिकारखेदं निरूप्य विचारयामास-"सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः, राज्ञान्तु चरितार्थता दुःखोत्तरैव । कुतः—

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नाऽतिश्रमाऽपनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवाऽऽतपत्रम्" ॥ २९ ॥

तदैव वैतालिकौ-"जयति जयति देवः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ३० ॥
नियमयसि कुमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्" ॥ ३१ ॥

इति तुष्टुवतुः । राजा तदाऽऽकर्ण्याऽवोचत्-"एतेन कार्य्या-ऽनुशासनपरिश्रान्ताः पुनर्नवीकृताः स्मः" । तत्क्षणमेव शकुन्तलया

सह शार्ङ्गरवादयो राजकुलमागच्छन् । अथकञ्चुकी-"भोः कामं धर्मकार्यमनतिपात्यं देवस्य, तथापीदानीमेव धर्माऽऽसनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवाऽविश्रमो लोकतन्त्राधिकारः । कुतः—

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाऽऽहित भूमिभारः
षष्ठांशवृत्तेरपि धर्म्म एषः" ॥ ३२ ॥

इति चिन्तयित्वा राजनं विज्ञापयामास—"एते खलु हिमवतो गिरेरुपत्यकारण्यवासिनः काश्यपसन्देशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणमिति" । अथ दुष्यन्तः—"अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसि" इति सोमरातमुपाध्यायं सन्दिश्य तपस्विदर्शनोचितं संनिहितहोमधेनुमग्निशरणाऽलिन्दमारुह्य प्रतिपालयन्स्थितः । प्रतिहारीञ्चोवाच-"वेत्रवति ! किमुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः ?

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितम्
धर्म्माऽरण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममाऽपचरितैर्विष्टम्भितो वीरुधामित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः" ॥ ३३ ॥

वेत्रवती प्रतिबभाषे—"देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवम्; किन्तु सुचरिताभिनन्दिन ऋषयः देवं सभाजयितुमागता इति तर्कयामि" । ततः शकुन्तलां पुरस्कृत्य गौतमीसहिताः

शार्ङ्गरवाद्यो मुनयस्तत्र प्राप्ताः । जनसंबाधं राजकुलं दृष्ट्वा शार्ङ्गरवः सखायं शारद्वतमुवाच–

"महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथाऽऽपीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव" ॥ ३४ ॥

शारद्वतः प्रत्यूचे– "शार्ङ्गरव ! स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः । अहं तु–

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि" ॥ ३५ ॥

राजा मुनीन् पप्रच्छ– "अपि निर्विघ्नतपसो मुनय इति" । ते ऊचुः–

"कुतोधर्म्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्म्मांशौ कथमाविर्भविष्यति" ॥ ३६ ॥

शार्ङ्गरवः कण्वसन्देशं राज्ञे कथयामास– "मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम्–

त्वमर्हतामग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्त्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापति ॥ ३७ ॥

तदिदानीमापन्नसत्त्वेयं प्रतिगृह्यतां सहधर्मचरणायेति" । दुर्वासःशापदोषाद्विस्मृतसर्ववृत्तान्तो राजा– "किमिदमुपन्यस्तम्"

इत्युवाच । इमं वचनोपन्यासं पावकममंस्त शकुन्तला । शार्ङ्गरव-उवाच— "कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्त-निष्णाताः—

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः" ॥ ३८ ॥

राजाऽब्रवीत्- "किंवाऽत्रभवती मया परिणीतपूर्वा इति ॥ शार्ङ्गरवोऽपृच्छत्- "किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः" इति । राजेमाम् अभिजानीयादिति गौतमी ततः शकुन्तलाया अवगुण्ठनमपाऽऽनयत् । शकुन्तलां निर्वर्ण्य राजा तथोपनतमक्लिष्टकान्ति-रूपं प्रथमपरिगृहीतं स्यान्नवेति व्यवस्यन् जोषमास्त । शार्ङ्गरवेण पृष्टः प्रत्युवाच- "भोस्तपोधनाः ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्वलक्षणां प्रतिपत्स्ये" इति । शारद्वतो नामाऽपरः कण्वशिष्यः प्रोवाच-"शकुन्तले ! वक्तव्यमुक्तमस्माभिः सोऽयमत्रभवान्दुष्यन्त एव माह । दीयतामस्मै प्रत्ययप्रतिवचनम्" इति । "इदमवस्थान्तरंगते तादृशेऽनुरागे किं वा स्मारितेन, आत्मेदानीं मे शोचनीय इति व्यवसितमेतत्" इत्यात्मगतमभिधाय शकुन्तला प्रकाशमुवाच-"पौरव ! न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तान-हृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तदभिज्ञानेनाऽनेन तवा-ऽऽशङ्कामपनेष्यामीति" । एवमुक्त्वा मुद्रास्थानं परामृश्य यदा ऽङ्गुली-यकशून्यामङ्गुलिमुपलेभे तदा सविषादं गौतमीमुखे दृष्टिं चिक्षेप । गौतम्युवाच—"नूनं ते शक्राऽवताराभ्यन्तरे शचीतीर्थशलिलं वन्दमा-नायाः प्रभ्रष्टमङ्गुलीयकम्" इति । राजोवाच- "इदं तत्प्रत्युत्पन्नमति

स्त्रैणमिति यदुच्यते" इति । शकुन्तलोवाच–"अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि। नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहित मासीत्। तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वया, अयं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। स न पुनस्ते ऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिले, तेन कृत प्रणयः। तदा त्वमित्थं प्रहसितोऽसि— सर्वः सगन्धेषु विश्वसिति। द्वावप्यत्रारण्यकाविति"। राजोवाच— "एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतवाङ्मधुभिराकृष्यन्ते विषयिणः"। गौतमी जगाद— "महाभाग ! नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्द्धितोऽनभिज्ञोऽयं जनः कैतवस्य"।

राजा प्राह— "तापसवृद्धे !

स्त्रीणामशिक्षितपटुत्वममानुषीषु,
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजातम्,
अन्यैर्द्विजैः परभृताः खलु पोषयन्ति" ॥ ३९ ॥

इति राज्ञोक्ते शकुन्तला सरोषमभिदधे— "अनार्य ! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुक प्रवेशिनः तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते" इति।

ततःशारद्वतः—

"तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी" ॥ ४० ॥

इति राजनमुक्त्वा प्रस्थितः। शकुन्तलापि तमन्वगच्छत्। तदा शार्ङ्गरवः सरोषं निवृत्य तां जगाद— "शकुन्तले !

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ ४१ ॥

तत् तिष्ठ, साधयामो वयम्" इति । राजा पुरोहितमन्वयुङ्क्त- "भवन्तमेवाऽत्रगुरुलाघवं पृच्छामि—

मूढः स्यामहमेषा वा वदेन्मिथ्येतिसंशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः" ॥ ४२ ॥

पुरोहितः प्रत्यूचे- "अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु। कुत इदमुच्यते इति चेत्, त्वं साधुभिरादिष्टपूर्वः— प्रथममेव चक्रवर्त्तिनं पुत्रं जनयिष्यसीति। स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो-भविष्यत्यभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपगमनमुपस्थितमेव" इति । "यथा गुरुभ्यो रोचते" इत्युक्त्वा राजा पुरोहितस्य वचो ऽनुमेने"। "भगवति वसुधे ! देहि मे विवरम्" इति रुदती शकुन्तला सह पुरोधसा तपस्विभिश्च निष्क्रान्ता। यावद्राजा पर्याकुलः शकुन्तलागतमेवाचिन्तयत्तावत् पुरोहितः प्रतिनिवृत्योवाच— "देव ! परावृत्तेषु कण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।
स्त्रीसंस्थानं चाऽप्सरस्तीर्थमारा-
दुत्क्षिप्यैनां ज्योतिरेकं जगाम" ॥ ४३ ॥

राजोवाच— "भगवन् ! प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव ।

किं वृथा तर्केणान्विष्यते। विश्राम्यतु भवानिति"। ततः पुरोहितो-निष्क्रान्तः। राजा पर्याकुलमानसः—

"कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम्" ॥ ४४ ॥

इति वदन् शयनभूमिं जगाम।

---

शक्राऽवताराभ्यन्तरवासी कश्चिद्धीवरो जालोद्गालादिभिर्मत्स्यबंधनोपायैः कुटुम्बभरणमकरोत्। एकस्मिन्दिवसे तेन रोहित-मत्स्यः खण्डशः कल्पितः। तदा तस्योदराभ्यन्तरे रत्नभासुर-मङ्गुलीयकं तेन दृष्टम्। पश्चाद्विक्रयाय तद् दर्शयन् नागरिकेण राज-श्यालेन चौर्याऽपराधे निगृहीतः स यथायथ मङ्गुलीयकाऽऽगमं तस्मै न्यवेदयत्। श्यालोऽपि तस्याङ्गुलीयकस्य विस्रगन्धमाघ्राय मत्स्योदरसंस्थितमेव तदिति निश्चित्य धीवरं निरोद्धुं रक्षिणावादिश्य राजकुलं जगाम। तत्र राज्ञे यथागमनमङ्गुलीयकं निवेद्य राजशासन-मादायप्रतिनिवृत्तः— "मुच्यतामेष जालोपजीवी, उपपन्नः किलाऽ-ङ्गुलीयकस्याऽऽगमः, एष भर्त्राङ्गुलीयकमूल्यसंमितो दापितः प्रसादः" इत्युक्त्वा पुरुषं बन्धनादुन्मुच्यार्थं तस्मै प्रायच्छत्। ततः "सत्यमूढ-पूर्वा मया तत्रभवती रहसि शकुन्तला मोहाच्च प्रत्यादिष्टा" इति स्वाङ्गुलीयकदर्शनादनुस्मृत्य पश्चात्तापमुपगतो दुष्यन्तः कुत्रापि निर्वृतिमलभमानः शिशिरातपच्छेदरमणीये प्रमदवनोद्देशे आत्मानं विनोदयितुं सह विदूषकेणगतः। तदैव प्रतीहारी पत्रहस्ता प्रविवेश विज्ञापयामास च— "देव! अमात्यो विज्ञापयति— अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षी-करोतु" इति। ततो राजा पत्रिकां गृहीत्वावाचयत्— "समुद्रव्यव-हारी सार्थवाहो धनमित्रो नाम नौव्यवसने विपन्नः। अनपत्यश्च किल तपस्वी। राजगामी तस्यार्थसञ्चयः" इति। अनन्तरमुवाच

राजा— "एतदमात्येन लिखितम्। कष्टं खल्वनपत्यता। वेत्रवति! महाधनत्वाद् बहुपत्नीकेन तत्रभवता भवितव्यम्। विचार्यतां यदि काचिदापन्नसत्वा तस्य भार्यासु स्यादिति"। प्रतीहारी प्रत्युवाच— "इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते" इति। दुष्यन्तः प्रतीहारीमुवाच— "ननु गर्भः पित्र्यं रिक्थमर्हति। गच्छ। एवममात्यं ब्रूहि। अन्यच्च—

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्" ॥ ४५ ॥

राजा दीर्घमुष्णं च निश्वस्याऽऽत्मगतं प्राह स्म— "एवं भोः सन्ततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति। ममाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्तः। धिङ्मामुपस्थितश्रेयोऽवमानिनम्—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा" ॥ ४६ ॥

सार्थवाहवृत्तान्तेन विमनायमानं राजानं दृष्ट्वा चतुरिका प्रतीहारीम् उवाच— "देवमाश्वासयितुं मेघप्रतिच्छन्दादाऽऽर्यमाढव्यं गृहीत्वाऽऽगच्छ" इति। राजोवाच— "अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः। कुतः—

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताऽश्रुशेषमुदकं पितरः पिबन्ति" ॥ ४७ ॥

एवमुक्त्वा मोहमुपगतः। तस्मिन्नेव क्षणे–"अब्रह्मण्यम् अब्रह्मण्यम्" इति माढव्यस्यार्तस्वरेण दुष्यन्तः पुनश्चेतनां लेभे। प्रतीहारी ससंभ्रमं प्रविश्योवाच— "परित्रायतां देवः संशयगतं वयस्यं, योऽदृष्टरूपेण केनापि सत्त्वेनाक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याऽग्रभूमिमारोपितः" इति। ततो राजा सशरं धनुरादाय सोपानमार्गमागत्य सर्वं शून्यं दृष्ट्वोवाच— "भोस्तिरस्करिणीगर्वित ! मदीयमस्त्रं त्वां द्रक्ष्यति। एष तमिषुं संदधे—

> यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम्।
> हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः" ॥ ४८ ॥

एवमुक्त्वाऽस्त्रं समधत्त। तदा विदूषकमुत्सृज्य मातलिरिन्द्रसारथिः प्रादुर्भूयोवाच—

> "कृताः शरव्यं हरिणा तवासुराः
> शरासनं तेषु विकृष्यतामिदम्।
> प्रसादसौम्यानि सतां सुहृज्जने
> पतन्ति चक्षूंषि न दारुणाः शराः" ॥ ४९ ॥

राजा मातलिं दृष्ट्वाऽस्त्रमुपसंहृत्य स्वागतं व्याजहार। विदूषकः सविस्मयं उवाच— "अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाऽभिनन्द्यते" इति। मातलिनोक्तम्— "अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः—

> सख्युस्ते स किल शतक्रतोरजय्य-
> स्तस्य त्वं रणशिरसि स्मृतो निहन्ता।
> उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
> स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ५० ॥

तस्मादात्तशस्त्रो भवानिदानीमैन्द्रं रथमारुह्य विजयाय प्रतिष्ठतामिति"। राजोवाच— "अनुगृहीतोऽहमनया मघवतः संभावनया। अथ वयस्यं प्रति भवता किमेवं प्रयुक्तमिति"। मातलिः प्रत्यवदत्— "कुतश्चिदपि मनःसन्तापादायुष्मान्मया विक्लवो दृष्टः। पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि। कुतः—

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः" ॥ ५१ ॥

राजा विदूषकमुवाच— "वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा। तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—

त्वन्मतिः केवला तावत् परिपालयतु प्रजाः।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः" ॥ ५२ ॥

तथेत्युक्त्वा विदूषको निष्क्रान्तः। राजाऽपि रथमारुह्य मातलिना सह जगाम। मघोनो नियोगमनुष्ठाय तेन सविशेषं सत्कृतो दुष्यन्तो मातलिना सहाऽऽकाशयानेन स्वर्गान्महीमभिप्रतस्थे। मार्गे दुष्यन्तो मातलिमुवाच— "स खलु मम मनोरथानामप्यभूमि र्विसर्जनाऽवसरसत्कारः। मम हि दिवौकसां समक्ष मर्धाऽऽसनोपवेशितस्य—

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का
न्दारमाला हरिणा पिनद्धा" ॥ ५३ ॥

मातलिरुवाच "किमिव नामाऽऽयुष्मान् अमरेश्वरान्नाऽर्हति ।

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेशरिणश्च पुरा नखैः" ॥ ५४ ॥

राजा सविनयमभिदधे–"अत्र खलु शतक्रोरेव महिमा स्तुत्यः–
सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वा भविष्यदरुणस्तमसां विभेत्ता
तंचेत् सहस्रकिरणो धुरि नाऽकरिष्यत्" ॥ ५५ ॥

राजा मातलिं पप्रच्छ–"मातले ! असुरसंप्रहारोत्सुकेन मया पूर्वेद्युर्दिवमधिरोहता न लक्षितः स्वर्गमार्गः । तत् कतरस्मिन्मरुतां पथि वर्तामहे"। मातलिना प्रत्युक्तम्–

"त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्त्तयति च प्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम्" ॥ ५६ ॥

राजा रथाऽङ्गमवलोक्योवाच– "मेघपदवीमवतीर्णौ स्वः । यतः–

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि–
र्हरिभिरचिरभासां तेजसा चाऽनुलिप्तैः ।

गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः" ॥ ५७ ॥

मातलिरुवाच— "क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते"।
राजाऽधोऽवलोक्योवाच— "वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः, तथाहि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाऽभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्तानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते" ॥ ५८ ॥

ततो हेमकूटं नाम पर्वतं दृष्ट्वा तस्मिंश्च तपस्यन्तं स्वायंभुवान्मरीचेर्जातं प्रजापतिं मातलेरुपश्रुत्य— "प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि" इति दुष्यन्त उवाच। ततो मातलिर्मारीचाऽऽश्रमस्य समीपे रथमस्थापयत्। राजा रथादवतीर्याऽत्रभवतामृषीणां तपोवनभूमिं सविस्मयमवलोक्योवाच—

"प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माऽभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो-
यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी" ॥ ५९ ॥

ततो राजा भगवते मारीचायाऽऽत्मानं निवेदयितुं मातलिं प्रेषयामास। दक्षिणं बाहुं स्पन्दमानमुपलभ्य यावद्राजाऽब्रवीत्—

"मनोरथाय नाऽशंसे किं बाहो ! स्पन्दसे वृथा ।
पूर्वाऽवधीरितं श्रेयो दुःखं हि परिवर्त्तते" । इति ॥ ६० ॥

तावत्सोऽर्धपीतस्तनं सिंहशिशुं प्रक्रीडितुं बलात्कारेण कर्षन्त मबालसत्त्वं कश्चिद्बालं तपस्विनीभ्यामनुबध्यमानं ददर्श। तस्य बलाधिक्यं दृष्ट्वा राजोवाच—

"महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।
स्फुलिङ्गाऽवस्थया वह्नि रेधाऽपेक्ष इव स्थितः"। इति ॥६१॥

ततस्तपस्विनी बालमुवाच— "वत्स! एनं बालमृगेन्द्रं मुञ्च। अपरं ते क्रीडनकं दास्यामीति"। बाले क्रीडनकमादातुं हस्तं प्रसारयति सति-तद्धस्तमवलोक्य राजोवाच— "कथं चक्रवर्तिलक्षणमप्यनेन धार्यते। तथा ह्यस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो—
विभाति जालग्रथिताङ्गुलिः करः।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपंकजम्" ॥ ६२ ॥

बालकाय वर्णचित्रितं मृत्तिकामयूरं आनेतुमेका तापसी गता। बाल उवाच— "अनेनैव तावत्क्रीडिष्यामि"। राजोवाच— "स्पृहयामि खलु दुर्ललितायास्मै—

आलक्ष्यदन्तमुकुलाननिमित्तहासै—
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काऽऽश्रयप्रणयिन स्तनयान् वहन्तो—
धन्यास्तदङ्गरजसा मलिनीभवन्ति" ॥ ६३ ॥

यदा स दुर्ललितो बालोऽपरां तापसीं नाऽगणयत्तदा सा राजानं दृष्ट्वोवाच— "भद्रमुख! एहि तावत्। मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम्"। राजा बालं निवारयन्नुवाच— "अयि भो महर्षिपुत्र!

एवमाऽऽश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम्" ॥ ६४ ॥

बालस्पर्शमुपलभ्य चाऽऽत्मगतं विचारयामास—

अनेन कस्याऽपि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम्।
कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्याऽयमङ्कात् कृतिनः प्ररूढः ॥ ६५ ॥

तापसी बालं दुष्यन्तं च निर्वर्ण्याऽऽश्चर्यमाश्चर्यमिति व्याहृत्य राजानमुवाच— "अस्य बालस्य रूपसंवादिनी त आकृतिरिति विस्मापितास्मि। अपरिचितस्यापि च ते ऽप्रतिलोमः संवृत्तः" इति। "को ऽस्य व्यपदेशः" इति राज्ञा पृष्टे तापसी जगाद— "पुरुवंशः"। एतच्छ्रुत्वा राजात्मगतमुवाच— "कथमेकान्वयो नाम। अतः खलु मदनुकारिणमेनमत्रभवती मन्यते। अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम्—

भवनेषु रसाऽधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकपतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम्" ॥ ६६ ॥

तापसीश्चाऽवदत्-"न पुनरात्मगत्या मानुषाणामेष विषयः"। सा प्रत्यूचे— "अप्सरः संबन्धेनाऽस्य जनन्यत्र देवगुरोस्तपोवने

प्रसूता" । इति । ततो राजा– "बालस्याऽस्य माता किमाख्यस्य राजर्षेः पत्नी" इति पप्रच्छ । तापसी प्रत्युवाच— "कस्तस्य धर्मदारपरित्यागिनो नाम सङ्कीर्तयितुं चिन्तयिष्यति" इति । दुष्यन्तोऽचिन्तयत्— "इयं कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छेयम् ? अथवाऽन्याय्यः परदारव्यवहारः" इति । तस्मिन्नेव क्षणे मृण्मयूरहस्ता तापसी तत्राऽऽगत्य— "सर्वदमन ! शकुन्तलावण्यं पश्य" इति बालमुवाच । नामसादृश्येन वञ्चितः स बालः प्रोवाच— "कुत्र मे माता" इति । ततो दुष्यन्तोऽचिन्तयत्— "किं वा शकुन्तलेत्यस्य मातुराख्या ? सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते" इति । सिंहशावविमर्दने बालस्य मणिबन्धात्परिभ्रष्टं रक्षाकरण्डकं तापसीभ्यां प्रतिषिध्यमानोऽपि राजाऽऽददौ । प्रतिषेधकारणं पृष्टा तापसी जगाद— "एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति, अथ गृह्णाति ? ततस्तं सर्पो भूत्वा दशति" इति । तापस्यौ तं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयितुं निष्क्रान्ते । 'पुत्रक!', इत्युक्त्वा बालं यदा राजा परिषस्वजे तदा तेनोक्तं— "मम खलु तातो दुष्यन्तो न त्वम्" इति । तापसीमुखाच्छ्रुतवृत्तान्ता शकुन्तला राजानमुपाजगाम । तां दृष्ट्वा राजाऽवदत्— "अये सेयमत्रभवती शकुन्तला । यैषा—

वसने परिधूसरे वसाना<br>
नियमक्षाममुखी धृतैकवेणिः ।<br>
अतिनिष्करुणस्य शुद्धशीला<br>
मम दीर्घं विरहव्रतं बिभर्ति" ॥ ६७ ॥

शकुन्तलायां राज्ञे जयशब्दमुच्चारयन्त्यां सबाष्पकण्ठत्वादर्धोक्ते विरमन्त्यां राजा जगाद—

"बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम्" ॥ ६८ ॥

दुष्यन्तः शकुन्तलायाः पादयोः प्रणिपत्याऽऽह स्म—

"सुतनु ! हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया" ॥६९॥

शकुन्तलोवाच—"उत्तिष्ठत्वाऽऽर्यपुत्रः; नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्याऽऽर्यपुत्रो मयि विरसः संवृत्तः" इति । तदा निवृत्य मातलिर्दुष्यन्तमुवाच— "दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते । भगवान् मारीचस्ते दर्शनं वितरति । तदेह्यायुष्मन् !" इति । राजा सह शकुन्तलया पुत्रेण च, अदित्या सार्धमासनस्थं मारीचमुपगम्य प्रणनाम । राजानं दृष्ट्वा मारीचः स्वधर्मपत्नीमुवाच— "दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः" ॥ ७० ॥

राजा च मातलिं प्रत्युवाच—

"प्राहुर्द्वादशधास्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।

यस्मिन्नात्मभवः परोऽपि पुरुषश्चक्रे भवायाऽऽस्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम्" ॥ ७१ ॥

सर्वे मारीचमभित उपाऽविशन् । मारीच एकैकं निर्दिश्योवाच—

"दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम्" ॥ ७२ ॥

राजोवाच-"भगवन् ! प्रागभिप्रेतसिद्धिः। पश्चाद् वो दर्शनम् ।
अतोऽपूर्वः खलु वोऽनुग्रहः । कुतः—

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः ॥ ७३ ॥

शकुन्तलामिमामाज्ञाकरीं वो गान्धर्वेण विवाहेनोपयम्य स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य। पश्चादङ्गुलीयकदर्शनात् तद्दुहितरमवगतोऽहम् । तदेत-च्चित्रमिव मे प्रतिभाति—

यथा गजो नेति समक्षरूपे
तस्मिन्नपक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीति-
स्तथाविधो मे मनसो विकारः" ॥ ७४ ॥

"वत्स ! अलमात्माऽपराधशंकया, संमोहस्त्वय्यनुपपन्नः" इत्युक्त्वा मारीचस्तस्मै दुर्वासःशापादिकं सर्वं कथयाञ्चकार ।

तच्छ्रुत्वा— "एष वचनीयान्मुक्तोऽस्मि" इति राजाब्रवीत् । मारीचः शकुन्तलामुवाच— "वत्से ! चरितार्थाऽसि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य—

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभाऽवकाशा ॥ ७५ ॥

मारीचस्ततो दुष्यन्तमब्रवीत्— "अस्माभिरनुष्ठितजात-कर्माणमेनं पुत्रं भाविनं चक्रवर्तिनमवगच्छतु भवान् ।

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहाऽयं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां 'भरत' इति लोकस्य भरणात्" ॥७६॥

भगवते कण्वाय प्रियमिदमावेदयितुं मारीचेन शिष्यः प्रहितः । ततोमारीचोदुष्यन्तमुवाच— "वत्स ! त्वमपि स्वाऽपत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य राजधानीं प्रतिष्ठस्व । अपि च—

तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञः स्वर्गिणः प्रीणयाऽलम् ।
युगशतपरिवर्त्तानेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ७७ ॥

अथ किन्ते भूयःप्रियमुपहरामि" इति। राजा प्रत्यब्रवीत्—"अतः परमपि प्रियमस्ति। यदि भगवान् प्रसन्नःप्रियं कर्तुमिच्छति; तर्हीदमस्तु—

पूवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतमहतां महीयताम्।
ममाऽपि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः" ॥ ७८ ॥

ततो दुष्यन्तः सपुत्रकलत्रो राजधानीं जगाम।

इति अभिज्ञानशाकुन्तलम्।

# हिमालय वर्णनम्

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥
यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥
अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषोगुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाऽङ्कः ॥ ३ ॥
आमेखलं संचरतां घनानां छायामधःसानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्याऽऽतपवन्ति सिद्धाः ॥ ४ ॥
पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वाऽपिहतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ५ ॥
यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किंनराणां तानप्रदायित्वमिवोपगन्तुम् ॥ ६ ॥
कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ ७ ॥
दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवाऽन्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥ ८ ॥
लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥ ९ ॥
भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ १० ॥
सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयन्नूर्ध्वमुखैर्मयूखैः ॥ ११ ॥
यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १२ ॥

( कुमार संभव प्रथम सर्गात् )

# "पार्वती तपस्या"

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता॥
इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥
निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम्।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात्॥
मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः॥
इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात्।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्॥
कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये॥
अथाऽनुरूपाऽभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत्॥
विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति॥
यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम्।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते॥
प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम्।
अकारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम्॥
विसृष्टरागादधरान्निवर्तितः तदङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः॥
महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले॥

पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणाङ्गनासु च ॥
अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥
अरण्यबीजाञ्जलिदानलालिताः तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥
कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥
विरोधिसत्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥
यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त कांक्षितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥
क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ॥
शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥
तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥
अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणा विधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥
निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा ।
तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥
स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपात चूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥

शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥
निनाय सात्यन्तहिमोत्किराऽनिलाः सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥
मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाऽधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाऽकरोदपाम् ॥
स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः ॥
मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥
अथाऽजिनाऽऽषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाऽऽश्रमो यथा ॥
तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥
विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥
अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥
अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥
अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि ! प्रचलैर्विलोचनैस्तवाऽक्षिसादृश्यमिव प्रयुञ्जते ॥
यदुच्यते पार्वति ! पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने ! तपस्विनामप्युपदेशतां गतम् ॥
विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥

अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि! ।
त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥
प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां संनतगात्रि ! संगतं मनीषिभिः साप्तपदीनमुच्यते ॥
अतोऽत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने ! न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥
कुले प्रसूतिः प्रथमस्य वेधसः, त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं, नवं वयः, तपःफलं स्यात्किमतः परं वद ॥
भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि ! त्वयि ॥
अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु ! कुतः पितुर्गृहे ।
पराभिमर्शो न तवाऽस्ति, कः करं प्रसारयेत्पन्नगरत्नसूचये ॥
किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥
दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥
निवेदितं निश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराऽऽप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥
कियच्चिरं श्राम्यसि गौरि ! विद्यते ममाऽपि पूर्वाऽऽश्रमसंचितं तपः ।
तदर्धभागेन लभस्व कांक्षितं वरं तमिच्छामि च साधु वेदितुम् ॥

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तिताऽनञ्जननेत्रमैक्षत ॥

सखी तदीया तमुवाच वर्णिनं निबोध साधो ! तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥
यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहाऽस्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥
द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥
अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥
यथा श्रुतं वेदविदांवर ! त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥
अथाह वर्णी–विदितो महेश्वरः, तदर्थिनी त्वं पुनरेव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥
अवस्तुनिर्बन्धपरे ! कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शंभोर्वलयीकृताऽहिना सहिष्यते तत्प्रथमावलम्बनम् ॥
त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं गजाऽजिनं शोणितबिन्दुवर्षि च ॥
चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।
अलक्तकाऽङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥
इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनःस्मेरमुखो भविष्यति ॥
द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥
वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि ! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

निवर्तयाऽस्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥
इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥
उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥
अकिञ्चनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥
विभूषणोद्भासि पिनद्धभोगि वा गजाऽजिनाऽऽलम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥
तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजोऽपि शुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ॥
असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममाऽत्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥
निवार्यतामालि ! किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराऽधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥
इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाऽचलव्यतिकराऽऽकुलितेव सिन्धुः
शैलाऽधिराजतनया न ययौ न तस्थौ ॥

अद्य प्रभृत्यवनताङ्गि ! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥

( कुमारसंभवस्य पञ्चम सर्गात् )

## पार्वती परिणयः

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥
वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरंध्रिवर्गम् ।
आसीत्पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥ २ ॥
संतानकाऽऽकीर्णमहापथं तच्चीनांशुकैः कल्पितकेतुमालम् ।
भासोज्वलत्काञ्चनतोरणानां स्थानान्तरस्वर्ग इवाऽऽबभासे ॥ ३ ॥
एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥
अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
संबन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥ ५ ॥
मैत्रेमुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रुः बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ ६ ॥
सा गौरसिद्धार्थनिवेशवद्भिः दूर्वाप्रवालैः प्रतिभिन्नशोभम् ।
निर्नाभि कौशेयमुपात्तबाणम् अभ्यङ्गनेपथ्यमलंचकार ॥ ७ ॥
बभौ च संपर्कमुपेत्य बाला नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने संधुक्ष्यमाणेव शशाङ्करेखा ॥ ८ ॥
तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृतांगरागाम् ।
वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥

विन्यस्तवैदूर्यशिलातलेऽस्मिन्नाबद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताऽष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः ॥ १० ॥
सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥
तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये क्लृप्ताऽऽसनं कौतुकवेदिमध्यम् ॥ १२ ॥
तावद्भवस्यापि कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात्पुरशासनस्य ॥ १३ ॥
तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।
स एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे ॥ १४ ॥
बभूव भस्मैव सिताङ्गरागः कपालमेवाऽमलशेखरश्रीः ।
उपान्तभागेषु च रोचनांको गजाजिनस्यैव दुकूलभावः ॥ १५ ॥
शङ्खान्तरद्योति विलोचनं यद् अन्तर्निविष्टामलपिङ्गतारम् ।
सांनिध्यपक्षे हरितालमय्याः तदेव जातं तिलकक्रियायाः ॥ १६ ॥
यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥ १७ ॥
दिवापि निष्ठ्यूतमरीचिभासा वाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥ १८ ॥
इत्यद्भुतैकप्रभवः प्रभावात्प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते खड्गे निषक्तप्रतिमं ददर्श ॥ १९ ॥
स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ २० ॥
तं मातरो देवमनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः पद्माकरं चक्रुरिवान्तरीक्षम् ॥ २१ ॥
तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे ।
बलाकिनी नीलपयोदराजी दूरं पुरः क्षिप्तशतह्रदेव ॥ २२ ॥

ततो गणैः शूलभृतः पुरोगैरुदीरितो मंगलतूर्यघोषः ।
विमानशृङ्गाण्यवगाहमानः शशंस सेवाऽवसरं सुरेभ्यः ॥ २३ ॥
उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ २४ ॥
मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥ २५ ॥
तमभ्यगच्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥ २६ ॥
एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमाऽवरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ ॥ २७ ॥
तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ २८ ॥
कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्संभावयामास यथाप्रधानम् ॥ २९ ॥
तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥ ३० ॥
विश्वावसुप्राग्रहरैः प्रवीणैः संगीयमानत्रिपुरावदानः ।
अध्वानमध्वान्तविकारलंघ्यस्ततारताराऽधिपखण्डधारी ॥ ३१ ॥
खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः ।
तटाभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे ॥ ३२ ॥
स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्तात् ।
पुरोविलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृष्यमाणः ॥ ३३ ॥
तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गादासन्नभूपृष्ठमियाय देवः ॥ ३४ ॥

तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामाऽऽगमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ३५ ॥
वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ३६ ॥
ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूरम् आवर्जितं नात्मशिरो विवेद ॥ ३७ ॥
स प्रीतियोगाद्विकसन्मुखश्रीः जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन्मन्दिरमृद्धमेनम् आगुल्फकीर्णापणमार्गपुष्पम् ॥ ३८ ॥
तत्राऽवतीर्याऽच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ३९ ॥
तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्यालयमभ्यगच्छन्प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ४० ॥
तत्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं प्रत्यग्रहीत्सर्वममन्त्रवर्जम् ॥ ४१ ॥
दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः ।
वेलासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ४२ ॥
तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुः कुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ ४३ ॥
प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥ ४४ ॥
प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।
मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ ४५ ॥
तौ दंपती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥ ४६ ॥
सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ४७ ॥

तदीषदार्द्रारुणगण्डलेखमुच्छ्वासि कालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद्बभूव ॥ ४८ ॥
वधूं द्विजः प्राह तवैष वत्से ! वह्निर्विवाहं प्रति कर्मसाक्षी ।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥ ४९ ॥
आलोचनान्तं श्रवणे वितत्य पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ५० ॥
ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥ ५१ ॥
इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥ ५२ ॥
वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि ! वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्टमूर्तौ त्वाशास्य चिन्तास्तिमितो बभूव ॥५३॥
क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात्कनकासनस्थौ ।
जायापती लौकिकमेषणीयमार्द्राऽक्षतारोपणमन्वभूताम् ॥ ५४ ॥
पत्रान्तलग्नैर्जलबिन्दुजालैराकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥ ५५ ॥
द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ५६ ॥
तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ ५७ ॥

एवं पार्वतीं परिणीय, समस्तसुरसमाजं विसृज्य, सगणोगणेशगुरुःस्वावासं कैलाशमयासीत् ।

( कुमारसंभवस्य सप्तमसर्गात् )

# बुद्धवैराग्यम्

ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्मादितपादपानि ।
शुश्राव पद्माकरमण्डितानि शीते निबद्धानि स काननानि ॥ १ ॥
श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम् ।
बहिः प्रयाणाय चकार बुद्धिम् अन्तर्गृहे नाग इवावरुद्धः ॥ २ ॥
ततो नृपस्तस्य निशम्य भावं पुत्राऽभिधानस्य मनोरथस्य ।
स्नेहस्य लक्ष्म्या वयसश्च योग्याम् आज्ञापयामास विहारयात्राम् ॥३॥
निवर्तयामास च राजमार्गे संपातमार्तस्य पृथग्जनस्य ।
मा भूत्कुमारः सुकुमारचित्तः संविग्नचेता इति मन्यमानः ॥ ४ ॥
प्रत्यंगहीनान् विकलेन्द्रियाँश्च जीर्णाऽतुरादीन् कृपणाँश्च भिक्षून् ।
ततः समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रुः ॥ ५ ॥
ततः कृते श्रीमति राजमार्गे श्रीमान् विनीताऽनुचरः कुमारः ।
प्रासादपृष्ठादवतीर्य काले कृताऽभ्यनुज्ञो नृपमभ्यगच्छत् ॥ ६ ॥

अथो नरेन्द्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य ।
गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच ॥ ७ ॥

ततः स जाम्बूनदभाण्डभृद्भिः युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः ।
अक्लीबविद्युच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह ॥ ८ ॥
ततः प्रकीर्णोज्ज्वलपुष्पजालं विषक्तमाल्यं प्रचलत्पताकम् ।
मार्गं प्रपेदे सदृशाऽनुयात्रः चन्द्रः सनक्षत्र इवान्तरिक्षम् ॥ ९ ॥
कौतूहलात्स्फीततरैश्च नेत्रैः नीलोत्पलाभैरिव कीर्यमाणः ।
शनैः शनैः राजपथं जगाहे पौरैः समन्तादभिवीक्ष्यमाणः ॥ १० ॥

पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः ।
जीर्णं नरं निर्ममिरे प्रयातुं संचोदनार्थं क्षितिपाऽऽत्मजस्य ॥ ११ ॥
ततः कुमारो जरयाऽभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तम् ।
उवाच संग्राहकमागतास्थः तत्रैव निष्कम्पनिविष्टदृष्टिः ॥ १२ ॥

क एष भोः सूत ! नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः ।
भ्रूसंवृताक्षः शिथिलानताङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा ? ॥ १३ ॥
इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय ।
संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥ १४ ॥
रूपस्य हर्त्री, व्यसनं बलस्य, शोकस्य योनि, र्निधनं रतीनाम् ।
नाशः स्मृतीनां, रिपुरिन्द्रियाणाम् , एषा जरा नाम ययैष भग्नः ॥१५॥
पीतं ह्यनेनापि पयः शिशुत्वे कालेन भूयः परिमृष्टमुर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेतः ॥ १६ ॥
इत्येवमुक्ते चलितः स किंचित् राजाऽऽत्मजः सूतमिदं बभाषे ।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥ १७ ॥
आयुष्मतोऽप्येष वयः प्रकर्षात् निःसंशयं कालवशेन भावी ।
एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैपलोकः ॥ १८ ॥
ततः स पूर्वाऽऽशयशुद्धबुद्धिः विस्तीर्णकल्पाऽर्जितपुण्यकर्मा ।
श्रुत्वा जरां संविविजे महात्मा महाशनेर्घोषमिवान्तिके गौः ॥ १९ ॥
निःश्वस्य दीर्घं स शिरः प्रकम्प्य तस्मिँश्च जीर्णे विनिवेश्य चक्षुः ।
तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं स संविग्नमिदं जगाद ॥ २० ॥
एवं जरा हन्ति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च ।
न चैव संवेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः ॥ २१ ॥
एवं गते सूत ! निवर्तयाऽश्वान् शीघ्रं गृहाण्येव भवान् प्रयातु ।
उद्यानभूमौ हि कुतो रतिर्मे जराभये चेतसि वर्तमाने ॥ २२ ॥
अथाऽऽज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियन्ता ।
ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ॥ २३ ॥
यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः ।
ततो नरेन्द्राऽनुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ॥ २४ ॥
अथाऽपरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यम् ।
दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ॥ २५ ॥

स्थूलोदरः श्वासचलच्छरीरः स्रस्तांऽसबाहुः कृशपाण्डुगात्रः ।
अम्बेति वाचं करुणं ब्रुवाणः परं समाश्लिष्य नरः क एषः ? ॥ २६ ॥
ततोऽब्रवीत्सारथिरस्य सौम्य ! धातुप्रकोपप्रभवः प्रवृद्धः ।
रोगाभिधानः सुमहाननर्थः शक्रोऽपि येनैष कृतोऽस्वतन्त्रः ॥ २७ ॥
इत्यूचिवान् राजसुतः स भूयस्तं सानुकम्पो नरमीक्षमाणः ।
अस्यैव जातः पृथगेष दोषः सामान्यतो रोगभयं प्रजानाम् ? ॥ २८ ॥
ततो बभाषे स रथप्रणेता कुमार ! साधारण एष दोषः ।
एवं हि रोगैः परिपीड्यमानो रुजातुरो हर्षमुपैति लोकः ॥ २९ ॥
इति श्रुतार्थः स विषण्णचेताः प्रावेपताम्बूर्मिगतः शशीव ।
इदं च वाक्यं करुणायमानः प्रोवाच किञ्चिन्मृदुना स्वरेण ॥ ३० ॥
इदं च रोगव्यसनं प्रजानां पश्यँश्च विश्रम्भमुपैति लोकः ।
विस्तीर्णविज्ञानमहो नराणां हसन्ति ये रोगभयैरमुक्ताः ॥ ३१ ॥
निवर्त्यतां सूत ! बहिःप्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ।
श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं संकुचतीव चेतः ॥ ३२ ॥
ततो निवृत्तः स निवृत्तहर्षः प्रध्यानयुक्तः प्रविवेश सद्म ।
तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं पुर्यागमं भूमिपतिश्चकार ॥ ३३ ॥
श्रुत्वा निमित्तं तु निवर्तनस्य संत्यक्तमात्मानमनेन मेने ।
मार्गस्य शौचाधिकृताय चैव चुक्रोश रुष्टोऽपि च नोग्रदण्डः ॥ ३४ ॥
भूयश्च तस्मै विदधे सुताय विशेषयुक्तं विषयप्रकारम् ।
चलेन्द्रियत्वादपि नापि शक्तो नास्मान्विजह्यादिति नाथमानः ॥ ३५ ॥
यदा च शब्दादिभिरिन्द्रियार्थैरन्तःपुरे नैव सुतोऽस्य रेमे ।
ततो बहिर्व्यादिशतिस्म यात्रां रसान्तरं स्यादिति मन्यमानः ॥ ३६ ॥
ततो विशेषेण नरेन्द्रमार्गे स्वलङ्कृते चैव परीक्षिते च ।
व्यत्यास्य सूतं च रथं च राजा प्रस्थापयामास बहिः कुमारम् ॥ ३७ ॥
ततस्तथा गच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः ।
तं चैव मार्गे मृतमुह्यमानं सूतः कुमारश्च ददर्श नाऽन्यः ॥ ३८ ॥

अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः।
दीनैर्मनुष्यैरनुगम्यमानो यो भूषितोऽश्वास्यवरुद्यते च ॥ ३६ ॥
ततः स शुद्धात्मभिरेव देवैः शुद्धाधिवासैरभिभूतचेताः।
अवाच्यमप्यर्थमिमं नियन्ता प्रव्याजहारार्थविदीश्वराय ॥ ४० ॥
बुद्धीन्द्रियप्राणगुणैर्वियुक्तः सुप्तो विसंज्ञस्तृणकाष्ठभूतः ।
संवर्ध्य संरक्ष्य च यत्नवद्भिः प्रियाप्रियैस्त्यज्यत एष कोऽपि ॥ ४१ ॥
इति प्रणेतुः स निशम्य वाक्यं संचुक्षुभे किञ्चिदुवाच चैनम्।
किं केवलस्यैव जनस्य धर्मः? सर्वप्रजानामयमीदृशोऽन्तः? ॥ ४२ ॥
ततः प्रणेता गदति स्म तस्मै सर्वप्रजानामयमन्तकर्मा।
हीनस्य मध्यस्य महात्मनो वा, सर्वस्य लोके नियतो विनाशः॥ ४३ ॥
ततः स धीरोऽपि नरेन्द्रसूनुः श्रुत्वैव मृत्युं विषसाद सद्यः।
अंसेन संश्लिष्य च कूबराग्रं प्रोवाच निह्रादवता स्वरेण ॥ ४४ ॥
इयं च निष्ठा नियतं प्रजानां प्रमाद्यति त्यक्तभयश्च लोकः।
मनांसि शङ्के कठिनानि नृणां स्वस्थास्तथा ह्यध्वनि वर्तमानाः ॥ ४५ ॥
तस्माद्रथं सूत! निवर्त्यतां नो विहारभूमौ न हि देशकालः।
जानन् विनाशं कथमार्त्तिकाले सचेतनः स्यादिह हि प्रमत्तः ॥ ४६ ॥

इति वैराग्योदयः
बुद्धचरितस्य तृतीय सर्गात्

## अथ श्रमणदर्शनिश्चयः

अथ मन्त्रिसुतैः क्षमैः कदाचित्सखिभिश्चित्रकथैः कृतानुयात्रः।
वनभूमिदिदृक्षया शमेप्सुर्नरदेवानुमतो बहिः प्रतस्थे ॥ १ ॥
नवरुक्मखलीनकिंकिणीकं प्रचलच्चामरचारुहेमभाण्डम्।
अभिरुह्य सकण्ठकं सदश्वं प्रययौ केतुमिव द्रुमाब्जकेतुः ॥ २ ॥
स निकृष्टतरां वनान्तभूमिं वनलोभाच्च ययौ महीगुणेच्छुः।
सलिलोर्मिविकारसीरमार्गां वसुधां चैव ददर्श कृष्यमाणाम् ॥ ३ ॥

हलभिन्नविकीर्णशष्पदर्भां हतसूक्ष्मक्रिमिकाण्डजन्तुकीर्णाम् ।
समवेक्ष्य रसां तथाविधां तां स्वजनस्येव वधे भृशं शुशोच ॥ ४ ॥
कृषतः पुरुषांश्च वीक्षमाणः पवनार्कांऽशुरजोविभिन्नवर्णान् ।
वहनक्लमविक्लवांश्च धुर्यान् परमार्यः परमां कृपां चकार ॥ ५ ॥
अवतीर्य ततस्तुरङ्गपृष्ठाच्छनकैर्गां व्यचरच्छुचा परीतः ।
जगतो जननव्ययं विचिन्वन् कृपणं खल्विदमित्युवाच चार्त्तः ॥ ६ ॥
मनसा च विविक्ततामभीप्सुः सुहृदस्ताननुयायिनो निवार्य ।
अभितश्चलचारुपर्णवत्या विजने मूलमुपेयिवान् स जम्ब्वाः ॥ ७ ॥
निषसाद च तत्र शौचवत्यां भुवि वैदूर्यनिकाशशाद्वलायाम् ।
जगतः प्रभवव्ययौ विचिन्त्य मनसश्च स्थितिमार्गमाललम्बे ॥ ८ ॥
समवाप्तमनःस्थितिश्च सद्यो विषयेच्छादिभिराधिभिश्च मुक्तः ।
सवितर्कविचारमाप शान्तं प्रथमं ध्यानमनाश्रवप्रकारम् ॥ ९ ॥
अधिगम्य ततो विवेकजं तु परमप्रीतिसुखं समाधिगम्यम् ।
इदमेव ततः परं प्रदध्यौ मनसा लोकगतिं निशम्य सम्यक् ॥ १० ॥
कृपणं बत यज्जनः स्वयं सन्नरसो व्याधिजराविनाशधर्मा ।
जरयार्दितमातुरं मृतं वा परमज्ञो विजुगुप्सते मदान्धः ॥ ११ ॥
इह चेदहमीदृशः स्वयं सन् विजुगुप्सेय परं तथास्वभावम् ।
न भवेत्सदृशं हि तत्क्षमं वा परमं धर्म्ममिमं विजानतो मे ॥ १२ ॥
इति तस्य विपश्यतो यथावज्जगतो व्याधिजराविपत्तिदोषान् ।
बलयौवनजीवितप्रवृत्तौ विजगामाऽऽत्मगतो मदः क्षणेन ॥ १३ ॥
न जहर्ष न चापि चानुतेपे विचिकित्सां न ययौ न तन्द्रिनिद्रे ।
न च कामगुणेषु संररञ्जे न च दिद्वेष परं न चावमेने ॥ १४ ॥
इति बुद्धिरियं च नीरजस्का ववृधे तस्य महात्मनो विशुद्धा ।
पुरुषैरपरैरदृश्यमानः पुरुषोश्चोपससर्प भिक्षुवेशः ॥ १५ ॥

नरदेवसुतस्तमभ्यपृच्छद्वद कोऽसीति शशंस सोऽथ तस्मै ।
नरपुङ्गव ! जन्ममृत्युभीतः श्रमणः प्रव्रजितोऽस्मि मोक्षहेतोः ॥१६॥
जगति क्षयधर्मके मुमुक्षुर्मृगयेऽहं शिवमक्षयं पदं तत् ।
अजनोऽन्यजनैरतुल्यबुद्धि र्विषयेभ्यो विनिवृत्तरागदोषः ॥ १७ ॥
निवसन् क्वचिदेव वृक्षमूले विजने वाऽऽयतने गिरौ वने वा ।
विचराम्यपरिग्रहो निराशः परमार्थाय यथोपपन्नभिक्षुः ॥ १८ ॥
इति पश्यत एव राजसूनोरिदमुक्त्वा स नभः समुत्पपात ।
स हि तद्वपुरन्यबुद्धिदर्शी स्मृतये तस्य समेयिवान् दिवौकाः ॥१९॥
गगनं खगवद्गते च तस्मिन् नृवरः संजहृषे विसिस्मिये च ।
उपलभ्य ततश्च धर्मसंज्ञामभिनिर्याणविधौ मतिं चकार ॥ २० ॥
तत इन्द्रसमो जितेन्द्रियश्च प्रविविक्षुः परमाश्वमारुरोह ।
परिवर्त्य जनं त्ववेक्षमाणस्तत एवाभिमतं वनं न भेजे ॥ २१ ॥
स जरामरणक्षयं चिकीर्षुर्वनवासाय मतिं स्मृतौ निधाय ।
प्रविवेश पुनः पुरं न कामाद्वनभूमेरिव मण्डलं द्विपेन्द्रः ॥ २२ ॥

( इति श्रमणत्वनिश्चयः )

श्री अश्वघोष विरचितस्य बुद्ध चरितस्य पञ्चम सर्गात्

# *सुभाषितानि*

## अथ सुभाषितप्रशंसा

संसदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम् ।
सूक्तं दधति सुवर्णं कल्याणमनर्घमिह धन्याः ॥ १ ॥
( कस्यापि )

याता यान्ति च यातारो लोकाः शोकाधिका भुवि ।
काव्यसंबन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ २ ॥
( श्री अनन्तदेवानाम् )

अविदितगुणापि सुकवेर्भणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ ३ ॥
( सुबन्धोः )

ये सूक्तीन्दुकलाकलङ्कजनका ये गाढगर्वज्वरा
ये वा केवलतर्ककर्कशधियः साक्षाद्ध ये श्रोत्रियाः ।
ये वा द्वेषमपोमलीमसधियस्तान् प्राज्ञगोष्ठीरस—
प्रौढप्रावृडवग्रहान् परिहरन् वाचां प्रसारं कुरु ॥ ४ ॥
( कस्यापि )

## अथ सहृदयकविप्रशंसा

अपि मुदमुपयान्तोवाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजघनमकरन्दस्यन्दपूर्णाऽऽलवालः
कलशसलिलसेकं नेहते किं रसालः ॥ ५ ॥
( जयदेवस्य )

## सुजन प्रशंसा

वदनं प्रसादसदनं
सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं
येषां, केषां न ते वन्द्याः ॥ ६ ॥

महतोऽपि हि विश्वासान्महाशया दधति नाल्पमपि लघवः ।
संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ ७ ॥
( गोवर्धनाचार्य्यस्य )

न भवति भवति च न चिरं
भवति चिरं चेत् फले विसंवादी ।
कोपः सत्पुरुषाणां
तुल्यःस्नेहेन नीचानाम् ॥ ८ ॥

आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने ।
छेदतापननिघर्षताडनैर्नान्यभावमुपयाति काञ्चनम् ॥ ६ ॥

सन्तोऽपि सन्तः क्व किरन्तु तेजः
क्व नु ज्वलन्तु क्व ननु प्रथन्ताम् ।
विधाय रुद्धा ननु वेधसैव
ब्रह्माण्डकोषे घटदीपकल्पाः ॥ १० ॥

क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्
पर्जन्यश्चपलाश्रयोऽभ्रपटलाद्दृश्यःसुवर्णाचलः ।
शून्यं व्योम रसा द्विजह्वविधृता स्वर्धामधेनुः पशुः
काष्ठं कल्पतरुर्दृषत् सुरमणिस्तत्केन साम्यं सताम्॥ ११ ॥

कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः
कस्माद्वा जलधारयैव धरणिं धाराधरः सिञ्चति ।
भ्रामं भ्राममयं च नन्दयति वा कस्मात् त्रिलोकीं रविः
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ १२ ॥

ये जाते व्यसने निराकुलधियः, संपत्सु नाऽभ्युन्नताः
प्राप्ते नैव पराङ्मुखाः, प्रणयिनि प्राणोपयोगैरपि ।
ह्रीमन्तः स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डिता—
स्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥१३॥

## अथ महतां प्रशंसा

गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि ।
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥ १४ ॥
( कस्यापि )

ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो-
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भैरिव सुस्थितैः कलिभरक्रान्ता धरा धार्यते ॥ १५ ॥
( कस्यापि )

अङ्गनवेदी वसुधा, कुल्या जलधिः, स्थली च पातालम् ।
वल्मीकश्च सुमेरुः, कृतप्रतिज्ञस्य वीरस्य ॥ १६ ॥
( बाणभट्टस्य )

पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ १७ ॥
समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ १८ ॥
( माघस्य )

## अथ मनस्विप्रशंसा

ब्रह्माण्डं कियदस्ति तत्र वसुधापिण्डं किमाचक्ष्महे
तत्राप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन ।
तेभ्यो दैन्यशमोपनीतविभवा दृष्टानुकम्पास्तु ते मे
धिङ्मूढाः स्पृहयन्ति हन्त किमपि स्वार्थेन तेभ्योऽपि ये ॥ १९ ॥
( श्री देवगणदेवानाम् )

## अथोदारप्रशंसा

कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ २० ॥
द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान् ।
द्विर्ददाति न चार्थिभ्यो रामोद्विर्नाभिभाषते ॥ २१ ॥

## अथ गुणप्रशंसा

गुणिनि गुणज्ञो रमते नाऽगुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्कमलं न दर्दुरस्त्वेकवासोऽपि ॥ २२ ॥
कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वापि गोरोमतः
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् ।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ २३ ॥

## अथ सन्तोष प्रशंसा

वयमिह परितुष्टा वल्कलैस्त्वंदुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स हि भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोर्थवान् को दरिद्रः ॥ २४ ॥
(भर्तृहरेः)

## अथ संसर्ग प्रशंसा

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्य भवन्ति योग्या अयोग्याश्च ॥ २५ ॥
(विष्णुशर्मणः)

## दुर्जन निन्दा

यद्वीक्ष्यते खलानां माहात्म्यं क्वापि दैवयोगेन ।
काकानामिव शौक्ल्यं तदपि हि नचिरादनर्थाय ॥ २६ ॥

( गोवर्धनाचार्य्यस्य )

रविरपि न दहति तादृक् यादृक् संदहति बालुकानिकरः ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ २७ ॥
विषधरतोप्यतिविषमः खल इति न मृषा वदन्ति विद्वान्सः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥ २८ ॥

( सुबन्धोः )

अति मलिने कर्त्तव्ये
भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां
रूपं प्रतिपद्यते दृष्टिः ॥ २९ ॥

( सुबन्धोः )

विषमा मलिनात्मनो द्विजिह्वा जिह्मगा इव ।
जगत्प्राणहरा नित्यं कस्य नोद्वेजकाः खलाः ॥ ३० ॥

( हरिगणस्य )

## अथ कृपणनिन्दा

यत्करोत्यरतिं क्लेशं तृष्णां मोहं प्रजागरम् ।
न तद्धनं कदर्य्याणां हृदयव्याधिरेव सः ॥ ३१ ॥

( क्षेमेन्द्रस्य )

मृत्युः शरीरगोप्तारं वसुरक्षं वसुंधरा ।
दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ३२ ॥

( बाणभट्टस्य )

त्यागभोगविहीनेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ३३ ॥
( कस्यापि )

कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ ३४ ॥
( व्यासस्य )

दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ ३५ ॥
विद्यावतः कुलीनस्य धनं याचितुमिच्छतः ।
कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ ३६ ॥
दक्षिणाऽऽशाप्रवृत्तस्य प्रसारितकरस्य च ।
तेजस्तेजस्विनोऽर्कस्य हीयतेऽन्यस्य का कथा ॥ ३७ ॥

## अथ याचकनिन्दा

उड्डीना गुणपत्त्रिणः सुखफलान्याराद्विकीर्णान्यधः
पर्य्यस्ताः परितो यशःस्तबकिताः संपल्लतापल्लवाः ।
प्रागेवापवृतः प्रमोदहरिण श्छायाकथाऽन्तं गता
दैन्यारण्यमतंगजेन महता भग्नेऽभिमानद्रुमे ॥ ३८ ॥

## अथ दरिद्रनिन्दा

अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागान्न संकुचति दुर्ललितं मनो मे ।
याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं प्रविलम्बितेन ॥ ३६ ॥
( माघकवेः )

वासःखण्डमिदं प्रयच्छ यदि वा स्वाऽङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ ! भवतः पृष्ठे पलालोच्चयः ।
दम्पत्योरिति जल्पितं निशि यदा चौरः प्रविष्टस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ४० ॥

## अथ मूर्खनिन्दा

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च पुनर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥ ४१ ॥

( भवभूतेः )

लभेत सिकतासु तैलमपि यत्नतः पीडय—
न्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४२ ॥

( भर्तृहरेः )

## अथ तृष्णानिन्दा

भ्रान्तं याचनतत्परेण मनसा देहीति वाक् प्रेरिता
भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत् ।
साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं
तृष्णे देवि ! यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ ४३ ॥

( कस्यापि )

## अन्योक्तिः ( चन्द्रः )

प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः
स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः ।

अतिपरिचयदोषात् कस्य नो मानहानिः
नव नव गुणरागी प्रायशः सर्वलोकः ॥ ४४ ॥

कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्विजपति—
र्द्युतिस्तादृग्नूत्ना जनिरपि च रत्नाकरकुले ।
बहु ब्रूमः किं वा पुरहरशिरोमण्डनमसि
त्वदीयं तत्सर्वं शशधर ! कलङ्काद्विफलितम् ॥ ४५ ॥

उच्चैः स्थानकृतोदयैर्बहुविधैर्ज्योतिर्भिरुद्यत्प्रभैः
शुक्राद्यैः किममीभिरत्र वितथा प्रौढिं दधानैरपि ।
यावल्लोकतमोपहेन भवता लक्ष्मीर्न विस्तार्यते
तावच्चन्द्र ! कथं प्रयाति परमां वृद्धिं स रत्नाकरः ॥ ४६ ॥

( त्रिलोचनस्य )

## अन्योक्तिः ( बालाः )

ये शिरसि विनिहिता अपि
भवन्ति न सखे समानसुखदुःखाः ।
चिकुरा इव ते बाला
एव, जडाः पाण्डुभावेऽपि ॥ ४७ ॥

( गोवर्धनाचार्य्यस्य )

## अन्योक्तिः ( कूपजलम् )

कूपप्रभवाणां परमुचितमपां पट्टबन्धनं मन्ये ।
याः शक्यन्ते लब्धुं न पार्थिवेनापि विगुणेन ॥ ४८ ॥

( गोवर्धनाचार्य्यस्य )

## अन्योक्तिः ( चन्दनम् )

यदि चन्दनविटपी फलपुष्पविवर्जितः कृतो विधिना ।
निजवपुषैव तथापि हि स हरति संतापमपरेषाम् ॥ ४९ ॥

## अन्योक्तिः ( गजः )

यूथपते ! तव कश्चिन्न हि मानस्यानुरूप इह विटपी ।
प्रेक्ष्य दिनं निदाघद्राघीयः क्व खलु ते छाया ॥ ५० ॥

## अन्योक्तिः ( मेघः )

शालेयेषु शिलातलेषु च गिरेः शृङ्गेषु गर्त्तेषु च
श्रीखण्डेषु विभीतकेषु च तथा पूर्णेषु रिक्तेषु च ।
स्निग्धेन ध्वनिनाऽखिलेऽपि जगतीचक्रे समं वर्षतो-
वन्दे वारिदसार्वभौम ! भवतो विश्वोपकारि व्रतम् ॥ ५१ ॥

( कस्यापि )

अये हेलावेलातुलितकुलशैले जलनिधौ
कुतो वारामोघं वद जलद ! मोघं वितरसि ।
समन्तादुत्तालज्वलदनलकीलाकवलन—
क्रमोपेतानेतानुपचरपयोभिर्विटपिनः ॥ ५२ ॥

( बिल्हणस्य )

## अन्योक्तिः ( क्षमा )

आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य च
सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा ॥ ५३ ॥

( कस्यापि )

## अन्योक्तिः ( गुरुपदम् )

यन्नोपकारकं यन्न भूषणं यत्प्रकोपमातनुते ।
गुरुणाऽपि तेन कार्यं पदेन किं श्लीपदेनेव ॥ ५४ ॥

( गोवर्धनाचार्य्यस्य )

## अथ दैवाख्यानम्

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः।
तत्राऽप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ५५ ॥

( भर्तृहरेः ) ।

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहु साधनता ।
अवलम्बनाय दिनभर्तुरभूत् न पतिष्यतः करसहस्रमपि ॥ ५६ ॥

( माघकवेः )

## अथ प्रकीर्णाख्यानम्

निष्कलङ्ककलयैकयाऽपि यः संयुतः स खलु पूज्यते जनैः ।
भद्र ! पश्य जलजोपि धार्य्यते शंकरेण शिरसा निशाकरः ॥ ५७ ॥

( शार्ङ्गधरस्य )

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ५८ ॥

( भर्तृहरेः )

भक्ते द्वेषो जडे प्रीतिररुचिर्गुरुलङ्घनम् ।
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥ ५९ ॥

( कस्यापि )

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु
शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ६० ॥

( भर्तृहरेः )

गेहं दुर्गतबन्धुभि र्गुरुगृहं छात्रैरहङ्कारिभिः
हट्टं पत्तनवञ्चकैर्मुनिजनैः शापोन्मुखैराश्रमान् ।
सिंहाद्यैश्च वनं, खलैर्नृपसभां, चौरैर्दिगन्तानपि
संकीर्णानवलोक्य सत्यसरलः साधुः क्व विश्राम्यति ॥ ६१ ॥

## अथ समस्या

विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ६२ ॥

( कस्यापि )

## समस्या

भवति हृदयहारी कोऽपि कस्यापि हेतुः
न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयितवनान्ते कोकिलारावरम्ये
विकसति न वसन्ते मालति कोऽत्र हेतुः ॥ ६३ ॥

## अथ जातिः ( महोक्षः )

गर्जित्वा मेघधीरं प्रथममथ शनैर्मण्डलीकृत्य देहं
शृङ्गाभ्यां भीषयन्तावभिमुखमवनिं दारयन्तौ खुराग्रैः ।
मन्दं मन्दं समेत्य स्थिरनिहतपदं दत्तघातौ सरोषं
युध्येते चालयन्तौ कुटिलितमसकृत्पुच्छमेतौ महोक्षौ ॥६४॥

( कस्यापि )

## धेनुः

आहत्याऽऽहत्य मूर्ध्ना द्रुतमनुपिबतः प्रस्नुतं मातुरूधः
किञ्चित्कुब्जैकजानोरनवरतचलच्चारुपुच्छस्य धेनुः ।
उत्तीर्णा तर्णकस्य प्रियतनयतया दत्तहुँकारमुद्रा
विस्रंसिक्षीरधारालवशबलमुखस्याङ्गमातृप्ति लेढि ॥ ६५ ॥

तृप्ति पर्यन्त

( मयूरस्य )

## नैयायिकः

कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां
घोषं कञ्चन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः ।
प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा
व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥ ६६ ॥

## अथ नीतिः

लक्ष्म्या परिपूर्णोऽहं न भयं मोहनिद्रैषा ।
परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः ॥ ६७ ॥

( कस्याऽपि )

यत्रार्जवेन लघुता गरिमाणं यत्र वक्रता तनुते ।
छन्दः शास्त्र इवास्मिँल्लोके सरलः सखे ! किमसि ॥ ६८ ॥

( गोवर्धनाचार्य्यस्य )

विपदि धैर्यमथाऽभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाऽभिरुचि र्व्यसनं श्रुतौ
प्रकृति सिद्धमिदं हि महात्मनाम् ॥ ६९ ॥

यावत् स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो-
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।

आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ७० ॥

( भर्तृहरेः )

वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोपि नेष्टः ।
किं तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥७१॥

( कस्यापि )

यात्येकतोऽस्तशिखरं पतिरोषधीना—
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवाऽऽत्मदशान्तरेषु ॥ ७२ ॥

रम्याणि वीक्ष्य मधुरांश्च निशम्यशब्दा-
न्पर्युत्सुकीभवति यत्सुखितो ऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ ७३ ॥

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नाऽतिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ७४ ॥

ज्वलति चलितेन्धनो ऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते जन्तुः ॥ ७५ ॥

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ७६ ॥

आलक्ष्यदन्तमुकुलाननिमित्तहासा-
नव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो-
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ७७ ॥

······ ······ ····

···· ······ ······

सर्वः कल्ये वयसि यतते भोक्तुमर्थान् कुटुम्बी ।
पश्चात् पुत्रैरपहृतभरः कल्पते विश्रमाय ॥ ७८ ॥

यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ ७९ ॥

पुराणमित्येव न साधु सर्वम् न चापि सर्वं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढःपरप्रत्ययनेय बुद्धिः ॥ ८० ॥

पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ८१ ॥

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोहणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ८२ ॥

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ८३ ॥

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ ८४ ॥

श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥ ८५ ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाऽऽविलं पयः ॥ ८६ ॥

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ ८७ ॥

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥ ८८ ॥
न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलक्ष्यते ॥ ८९ ॥

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितां शतानि हि समुद्रगाः प्रापयन्त्यब्धिम् ॥ ९० ॥

( एते कालिदासस्य )

सर्वथा व्यवहर्त्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ९१ ॥
लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ ९२ ॥

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणै रवताडनानि ॥ ९३ ॥
प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ ९४ ॥
वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ९५ ॥
न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ९६ ॥
अन्तःकरणतत्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ॥ ९७ ॥
पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ ९८ ॥

सन्तानवाहीन्यपिमानुषाणां दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ॥ ९९ ॥
सुहृदिव प्रकटय्य सुखप्रदां प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम् ॥ १०० ॥

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ १०१ ॥

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ १०२ ॥

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां साहि लोकस्य निष्कृतिः ॥ १०३ ॥

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिंसूते दुर्हृदो निप्रहन्ति ।
शुद्धां शान्तां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥१०४॥

व्यतिषजति पदार्थानान्तरः कोऽपिहेतु-
र्न खलुबहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतंगस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १०५ ॥

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ १०६ ॥

ते श्रोत्रियास्तत्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्ताय च कर्मणेऽर्थान्दारानपत्याय तपोऽर्थमायुः ॥ १०७ ॥

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रतिनैष यत्नः ।

उत्पत्स्यतेऽस्ति मम कोपि समानधर्मा
काले ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १०८ ॥

यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं नहि ततः कश्चिद्गुणो नाटके ।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥ १०९ ॥

बहिः सर्वाकारप्रगुणरमणीयं व्यवहर-
न्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमतिसंधाय कपटै-
स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥११०॥

शास्त्रे प्रतिष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोधः प्रतिभानवत्वमेते गुणाः कामदुघाः क्रियासु ॥१११॥

शान्तिः कुतस्तस्य भुजङ्गशत्रो र्यस्मिन्निबद्धानुशया सदैव ।
जागर्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ ११२ ॥

हरेरतुलविक्रमप्रणयलालसः साहसे
स एव भवति क्वणत्कररुहप्रचण्डः सखा ।
स्फुरत्करटकोटरस्खलितदानसिक्तानन-
द्विपेश्वरशिरःस्थिरास्थिदलनैकवीरः करः ॥ ११३ ॥

कुमुदाकरेण शरदिन्दुचन्द्रिका यदि रामणीयकगुणाय संगता ।
सुकृतं तदस्तु कतमस्त्वयं विधिर्यदकालमेघविततिर्व्ययूयुजत् ॥११४॥

तमांसि ध्वंसन्ते परिणमति भूयानुपशमः
सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम् ।
अथ प्रत्यासङ्गः कमपि महिमानं वितरति
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ ११५ ॥

अमोघशस्त्रं क्षत्रस्य ब्राह्मणानामनुग्रहः ।
दुरासदं च तत्तेजः क्षत्रं यद्ब्रह्मसंयुतम् ॥ ११६ ॥

निस्सन्देहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं ।
राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥ ११७ ॥
असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणः ।
यथा वैद्यस्तथा राजा शस्त्रपाणिर्भविष्यति ॥ ११८ ॥
अन्योन्यमाहात्म्यविदोरन्यैरविदितात्मनोः ।
विभ्राजते विरोधोऽपि नाम स्नेहे तु का कथा ॥ ११६ ॥
प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम् ।
आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥ १२० ॥
न कम्पन्ते झंझामरुति किल वाति प्रतिदिशं
समुन्मूर्च्छत्सारा:कुलशिखरिणः किञ्चिदपि ते ।
न मर्यादां तेऽपि प्रतिजहति गाम्भीर्यगरिम-
स्फुरद्वागब्रह्माणोऽकलितमहिमानोऽम्बुनिधयः ॥ १२१ ॥
(भवभूतेः)
अन्योन्यप्रीतिकृतां समानरूपानुरागकुलवयसाम् ।
केषाञ्चिदेव मन्ये समागमो भवति पुण्यवताम् ॥ १२२ ॥
सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ १२३ ॥
क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्यकः क्रमः ॥ १२४ ॥
यैरत्यन्तदयापरैर्न विहिता वन्ध्याऽर्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति ।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता
मातः संहर वाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ १२५ ॥
मेदोऽस्थिमज्जासृङ्मात्रसंघातेऽस्मिंस्त्वचावृते ।
शरीरे खलु का शोभा सदा बीभत्सदर्शने ॥ १२६ ॥

द्वीपादन्यस्मादपि मध्यादपिजलनिधेर्दिशोऽप्यन्तात् ।
आनीयझटिति घटयति विधिरभिमतमभिमुखीभूतः ॥१२७॥

( हर्षवर्धनस्य )

तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापिदोषेण ।
प्रविशन्ति शङ्कमाना राजकुलं प्रायशोभृत्याः ॥ १२८ ॥

प्रायो यत्किञ्चिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः ।
मत्तेभकुम्भतटगतमेति हि शृंगारतां भस्म ॥ १२९ ॥

( प्रियदर्शिकातः )

शून्यमपुत्रस्य गृहं चिरशून्यं यस्यनास्ति सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्वंशून्यं दरिद्रस्य ॥ १३० ॥

सुखं हि दुःखान्यनुभूयशोभते घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो यातिनरो दरिद्रतां धृतः शरीरेण मृतः स जीवति॥१३१॥

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ १३२ ॥

सत्यं न मे विभवनाशकृताऽस्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १३३ ॥

दारिद्र्याद्धियमेति ह्री परिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ १३४ ॥

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥ १३५ ॥

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।

सत्त्वं ह्रासमुपैति शीलशशिवः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥ १३६ ॥
सङ्गं नैव हि कश्चिदस्य कुरुते संभाषते नादरा-
त्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेवमहाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ १३७ ॥

सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनकोऽपि शोभते ।
पिशुनः पुनर्द्रव्यगर्वितो दुष्करः खलु परिणामदारुणः ॥ १३८ ॥

(शूद्रकस्य)

इति प्रथमो-बिन्दु समाप्तः

